॥ नमः श्रीजिनशासनाय ॥

श्री-

# सिद्धहेम-शब्दानुशासन-लघुवृत्तिः

[ षट्सहस्रीत्यपराभिधा ]

## प्रथमो विभागः

[ सार्द्धाध्यायद्वयात्मकः समासपर्यन्तः ]

॥ आगमिकतत्त्वजिज्ञासा शास्त्रतत्त्वेप्सा च विधिवत् सम्यक् ज्ञानशैल्या गुरुमुखेन व्याकरणाध्ययनमन्तरा न लब्धप्रतिष्ठा भवति ॥

: प्रकाशका :

श्री-जेशिंगभाई-कालीदास ट्रस्ट-अमदावाद

कार्यवाहकाः

| प्रथमावृत्तिः १००० | परिवर्द्धित संस्करणं प्रथमावृत्तिः | विक्रम सं. २०२९ |
| --- | --- | --- |
| वीर-नि. सं. २४९९ | ६/- | सिद्धहेम सं. ८३६ |

## પ્રકાશક તરફથી....

શાસનના સ્તંભ-સમા, વિશિષ્ટ ક્ષયોપશમવાળા, શ્રમણ-શ્રમણીઓના ભાષાકીય જ્ઞાનની નક્કરતા લાવનાર વ્યાકરણના જ્ઞાનને સરળતાથી મેળવવા માટે બાલસુલભ સુગમ શૈલિથી પૂ૦ કલિકાલ-સર્વજ્ઞ **આ૦ શ્રી હેમચંદ્રસૂરીશ્વરભગવંતે** વિરચેલ શ્રી **સિદ્ધહેમશબ્દાનુશાસનની** ૧। લાખ શ્લોક પ્રમાણ રચના વિ. સં. ૧૧૯૩માં કરેલ.

એક પ્રસંગે **પરમાર્હત કુમારપાલ મહારાજા** સભામાં ચાલતી જ્ઞાનગોષ્ઠીમાં વ્યાકરણનું જ્ઞાન ન હોઇ ભાષાકીય અશુદ્ધિથી પ્રભાવિત બન્યા, એટલે તેઓની વિનંતિથી તેઓના હિતાર્થે ૭ હજાર શ્લોક પ્રમાણ **લઘુવૃત્તિની** રચના પૂ૦ કલિકાલસર્વજ્ઞ આચાર્યશ્રીએ ૧૮૦૦૦ શ્લોક પ્રમાણ બૃહદ્વૃત્તિના આધારે કરી. જેનું કે ઉમંગપૂર્વક અધ્યયન પાકી વયે પહોચેલ **પરમાર્હત કુમારપાલ મહારાજ** રાજકાજમાં બીજો સમય ઓછો મળતાં પાલખીમાં જતાં-આવતાં ચાલુ મુસાફરીએ પણ કરતા. જેનો કે નિર્દેશ મુખ-પૃષ્ઠ પર અંકિત છે.

પ્રથમ વિભાગનું સંપાદન કરી આપવા બદલ પૂ૦ ગણિવર્યશ્રીનો તથા આની પ્રેસકોપી આદિ કરવામાં યોગ્ય સહકાર આપનાર બાલમુનિશ્રી હેમચંદ્ર-સાગરજી મહારાજ, મુનિ રવીંદ્રસાગરજી મહારાજ, મુનિ સોમશેખરસાગરજી મહારાજ, મુનિ નયશેખરસાગરજી મહારાજ, તથા સુંદર સ્વચ્છ મુદ્રણ કરી આપનાર શ્રી બહાદુરસિંહજી પ્રિન્ટીંગ પ્રેસ પાલીતાણાના કાર્યવાહકોનો તેમજ પૂજ્ય મહારાજશ્રીની દેખરેખ તલે વ્યાવહારિક રીતે પ્રેસ-છપાઇ આદિની સઘળી જવાબદારી ઉઠાવનાર ચાણસ્મા નિવાસી શેઠ બાબુલાલ કેશવલાલ શાહ (હાલ ૧૧, નગરશેઠ માર્કેટ-રતનપોળ,અમદાવાદ) મુખપૃષ્ઠનું ચિત્ર દોરી આપનાર આર્ટિસ્ટ શ્રી દલસુખભાઇ શાહ આદિના ધર્મપ્રેમની સાદર અનુમોદના કરીએ છીએ.

વીર નિ. સં. ૨૪૯૯

વિ. સં. ૨૦૨૯

પોષ વદ ૨

૨૦-૧-૭૩

લિ૦

સારાભાઇ જેશિંગભાઇ

મનુભાઇ જેશિંગભાઇ

ચિનુભાઇ વાડીલાલ

બકુભાઇ ભગુભાઇ

બુદ્ધિધન સારાભાઇ

કાર્યવાહકો,

શેઠ શ્રી જે.કા.ટ્રસ્ટ-અમદાવાદ

# ભાવભરી

# વં....દ....નાં....જ....લિ

પરમપૂજ્ય પ્રૌઢપ્રતાપી શાસન-
પ્રભાવક અનેક તીર્થોદ્ધારક
બાળબ્રહ્મચારી શાસનસમ્રાટ્
સ્વ. પૂ૦ શ્રી ૧૦૦૮ શ્રીયુત

**આચાર્યદેવશ્રી વિજયનેમિસૂરીશ્વરજી**
**મહારાજના**

પવિત્ર ચરણ કમલોમાં
ભાવભરી
**વંદનાંજલિ**



નિવેદક,
મનુભાઈ જેસિંગભાઈ



કદંબગિરિતીર્થોદ્ધારક
સ્વ. આ. મહારાજ શ્રી વિજયનેમિસૂરીશ્વરજી
મહારાજ

જન્મ વિ. સં. ૧૯૨૯ કા. શુદ ૧ શનિ મહુવા
દીક્ષા વિ. સં. ૧૯૪૫ જેઠ શુદ ૭, ભાવનગર
આચાર્ય પદ વિ સં. ૧૯૬૪ જેઠ શુદ ૫, ભાવનગર
સ્વર્ગવાસ વિ. સં. ૨૦૦૫ આસો વદ ૦)) દીવાળી શુક્ર મહુવા

卐 સાહિત્ય અને સંસ્કારના અનુરાગી 卐

# સ્વ. શેઠશ્રી જેસિંગલાલ કાળીદાસ શેરદલાલની

# જીવન ઝરમર

સંવત ૨૦૦૨ ની વાત છે, સ્વર્ગસ્થ શેઠશ્રી જેસિંગભાઇ પોતાના બે લાડકવાયા સંતાનોને લઇ પૂજ્ય શાસન સમ્રાટ્ શ્રી વિજયનેમિસૂરીશ્વરજી મહારાજ સાહેબને વંદન કરવા માટે ગયા હતા, ત્યાં વાતમાં ને વાતમાં તેઓશ્રીએ આચાર્ય મહારાજને પોતાનો શુભ સંકલ્પ જણાવતાં કહ્યું—

હું મારી મિલ્કતના અમુક ભાગની રકમના વ્યાજમાંથી જે રકમ ભેગી થાય તે રકમ સાત ક્ષેત્રોમાં વાપરવા ઈચ્છું છું.

પૂજ્ય આચાર્ય મહારાજશ્રીએ આ શુભ સંકલ્પને આશીર્વાદ આપ્યા અને આ સખી ઉદાર મના શેઠશ્રીએ તરત જ પોતાની અમુક મિલ્કતનું ટ્રસ્ટ કરી નાખ્યું.

આજે તો તેઓશ્રી દિવંગત થયા છે, પરંતુ તેમના એ પુણ્યકાર્યની દિવ્ય જ્યોત આજે પણ ઝગમગી રહી છે.

શાસન સમ્રાટ્ વિજયનેમિસૂરિજી મહારાજ સાહેબના તેઓ અનન્ય ભક્ત અને આજ્ઞાંકિત વિનેય; ગૃહસ્થ શિષ્ય હતા, તેઓશ્રીની શુભ પ્રેરણાથી તેમણે અનેક જિનમંદિરોમાં ઘણાં જિનબિંબો ભરાવવામાં તેમ જ પ્રતિષ્ઠા વગેરે શુભ કાર્યોમાં લક્ષ્મીના મમત્વનો ત્યાગ કરીને ઘણાં પુણ્ય કાર્યો કર્યાં છે.

આ સિવાય તેઓશ્રીએ મહા મંગલકારી પાપ નિવારક ને શાંતિદાયક નવકાર મહામંત્રનો વિધિપૂર્વક નવ લાખનો જાપ પૂર્ણ કર્યો હતો અને તેની પૂર્ણાહૂતિના સંદર્ભમાં ભારે દબદબાપૂર્વક અને અદકેરા ઉત્સાહથી શ્રી સિદ્ધચક્રનું પૂજન કરાવ્યું હતું.

શેઠશ્રી તો આજે ચાલ્યા ગયા છે. પરંતુ કેટલાક માનવી ફૂલ જેવા હોય છે, ફૂલ ખરી જાય છે, પણ પાછળ પમરાટ છોડી જાય છે, તેની પાંખડી પાંખડી ખત્મ થઈ જાય છે. પરંતુ તેની દરેક પાંખડી તેની મધુર સુવાસ મુકી જાય છે.

કળા-સાહિત્ય અને સંસ્કારના અનુરાગી



સ્વ. શેઠશ્રી જેશીંગભાઈ કાળીદાસ શેરદલાલ

| જન્મ : | સ્વર્ગવાસ : |
|---|---|
| સં. ૧૯૨૯ ચૈત્ર વદ ૮ | સં. ૨૦૧૦ આસો વદ ૩ |
| અમદાવાદ | અમદાવાદ |

શેઠશ્રી પણ એક એવું પુણ્ય પુષ્પ હતા, આજે તેઓશ્રી નથી પણ તેમની સુવાસ આજે પણ મ્હેંક મ્હેંક થાય છે અને એ સુવાસ કાયમ રહે તે માટે તેમના સુપુત્રો શ્રી મનુભાઇ અને શ્રી સારાભાઇ તેમના પૂજ્ય પિતાશ્રી શેઠશ્રી જેસિંગભાઇ કાલીદાસ ટ્રસ્ટમાંથી, પુણ્યકાર્યોમાં પોતાના પિતાશ્રીના જેવા જ ઉત્સાહ અને ઉમંગથી ઉછળતા હૈયે સાથ અને સહકાર આપે છે.

પૂ૦ સાધુ-સાધ્વી ભગવંતોને અભ્યાસમાં ઉપયોગી પાઠ્યપુસ્તક રૂપ લઘુવૃત્તિના આ પ્રકાશનના કાર્ય પ્રસંગે શેઠશ્રીની પુનિત ધર્મભાવનાને ગુણાનુરાગપૂર્વક શ્રદ્ધાંજલિ. લી૦

જે. કા. ટ્રસ્ટના કાર્યવાહકો

# प्रास्ताविकम्

अयि भोः प्रवरशेमुषीधनाः ! विशुद्धधारणाऽऽचान्त-स्वान्ताः ! प्रवरविद्याचरणपथाध्वनीनानां संयमैकदत्तचित्तानां श्रमण-श्रमणीनां जीवनशुद्धि-संयमस्फाति-नैर्जरिकफल-शुद्धिप्रस्थल-प्रवचनमातृष्टकसम्पन्न-चरणकरणसप्ततिसनाथ-संयमधर्मपालनं परमावश्यकम् ।

संयमपालनमूलमेव व्यवस्यते संयमपथोत्कगामिभिः विपुलश्री--स्नेहालुस्वजनपरिकरित-सुखसमृद्धिपरित्यजना-दूर्ध्वं खड्गधारानुरुप--चारित्रधर्म--मर्यादाऽऽत्मीकरण-रूपेण तपोधर्म-परिषहसहन-विविधदेशविहृति-लोचादि-कष्टसहनादिके सत्यपि समिति-गुप्तिपालन-सुदक्षत्व-परि-कर्मणायाम् । तत्रापि छद्मस्थानां गुप्तिधर्मस्य प्रवरत्वे-सत्यपि तत्र अनाद्यनवदग्रसंस्कार-प्रतिसंस्काराणां गुपिल-जालाक्रान्तत्वेन स्थेमानमलभमानानां प्रवर्त्तमानयोगानां समितिपञ्चकरूपेणाऽऽज्ञानुसारित्वविधानमावश्यकम् ।

तत्र चान्यासां समितीनां सुपाल्यत्वमपेक्षया, परं भाषासमितिस्तु गुरुगमाधारेणानधिगतप्रत्यलत्वानां सुदु-ष्पाला ।

सुविद्वन्मतज्ञज्ञानुशास्ति-सम्पादनबद्धकक्षाणां श्रमण-श्रमणीनां सेवायाम् ।

सम्पादने ह्यस्मिन् चिरत्नाध्ययनाध्यापन-प्रणालिकाऽनभिज्ञानामध्येतॄणां पाठयितॄणां चाध्ययनाऽध्यापने सुगमता भवेदिति हि लक्ष्यीकृत्य व्यवसितं वर्तते ।

सुविशिष्टपद्धतिं विना हि व्याकरणशास्त्रं न हि सुरुचिकरं भवतीत्यतः रुचि-धृति-धारणो-हशक्तिप्रभृतीनां समुदायं यथायोगमवेक्ष्य पृथक्करण-पदार्थपरिसंख्यान-प्रयोगसारूप्यादिपद्धतिसनाथं प्रस्तुतं हि व्याकरणं यदि समधीयेत समध्याप्येत वा ! तर्हि सुरसापादनेनाध्येतॄणां भाषासमितेः सुदुष्पाल्यत्वस्यापि सुपाल्यत्वे पर्यवसानार्थं व्याकरणाध्ययनं सम्यग् प्रत्यलं भवेदिति संपादकस्यैतत्-पंक्तिलेखकस्यानुभूति-भूमिकागतो हि सुदृढो विश्वासः ।

विभागत्रयात्मकस्यास्य सुनिर्धारितस्यायं समासप्रकरण-पर्यन्तो हि प्रथमो विभागः सार्द्धाध्यायद्वयात्मकः दशपाद-परिमितः विहारोद्यत-साधुसाध्वी-वहनसौकर्यायापादितः सन् यथामति शक्त्यनुरूपं सज्जीकृत्य प्रस्तूयतेऽध्ययनोद्यतानां संयमिनां पुरतः ।

कृतेऽपि प्रयत्ने छाद्मस्थ्यप्रयुक्ताऽनवधान-सीसका

साद्धध्यायद्वयात्मके दशपादरूपे ह्यस्मिन्

## प्रथमे विभागे

**सूत्राणां इयत्तावधारणमेवम्ः—**

| अध्यायः | पादः | सूत्रसंख्या | |
|---|---|---|---|
| १ | १ | ४२ | प्रथमाध्यायस्य सूत्रसंख्या २४१ |
| १ | २ | ४१ | |
| १ | ३ | ६५ | |
| १ | ४ | ९३ | |
| २ | १ | ११८ | द्वितीयाध्यायस्य सूत्रसंख्या ४६० |
| २ | २ | १२४ | |
| २ | ३ | १०५ | |
| २ | ४ | ११३ | |
| ३ | १ | १६३ | तृतीयाध्यायस्य पादद्वयस्य सूत्रसंख्या ३१९ |
| ३ | २ | १५६ | |

सर्वसूत्राणां योगसंख्या-

१०२०

विंशत्यधिकं सहस्रैकम् ।

## व्याकरणाध्ययनोपयोगि–लघुवृत्तेः प्रथम–भागे ह्यस्मिन् प्रकरणैकादशकं वर्तते

## श्रीसिद्ध-हेम-व्याकरणप्रणेतृ-
## कलिकालसर्वज्ञ-
## स्तुतिः

भ्रातः! संवृणु पाणिनिप्रलपितं कातन्त्रकन्था वृथा,
मा कार्षीः कटुशाकटायनवचः क्षुद्रेण चान्द्रेण किम्?।
किं कण्ठाभरणादिभिर्बठरयस्यात्मानमन्यैरपि;
श्रूयन्ते यदि तावदर्थमधुरा श्रीसिद्धहेमोक्तयः ॥ १ ॥

卐 卐 卐

श्रीहेमचन्द्रः कविकालिदासं,
सर्वज्ञकल्पः कविचक्रवर्ती ।
योगे च पातञ्जलयोगसूत्रं;
ज्ञानात् मुनीन्द्रोऽप्यधरीचकार ॥ २ ॥

卐

॥ श्रीवर्धमानस्वामिने नमः ॥

श्रीहेमचन्द्राचार्यविरचितं

स्वोपज्ञ-लघुवृत्तिसंवलितं

# श्रीसिद्धहेमचन्द्र-शब्दानुशासनम्।

प्रणम्य परमात्मानं, श्रेयःशब्दानुशासनम्।
आचार्यहेमचन्द्रेण, स्मृत्वा
किञ्चित् प्रकाश्यते ॥१॥

अर्हं ।१।१।१।

अर्हमित्येतदक्षरं
परमेश्वरस्य परमेष्ठिनो वाचकम्,
मङ्गलार्थं
शास्त्रस्याऽऽदौ
प्रणिदध्महे ॥ १ ॥

## सिद्धिः स्याद्वादात् । १ । १ । २ ।

स्याद्वादात्=

=अनेकान्तवादात्

प्रकृतानां शब्दानां सिद्धिः=

=निंष्पत्तिः ज्ञप्तिश्च

वेदितव्या ॥ २ ॥

## लोकात् । १ । १ । ३ ।

अनुक्तानां=

=संज्ञानां न्यायानां च

लोकाद्=

=वैयाकरणादेः

सिद्धिः=

=ज्ञप्तिश्च

वेदितव्या,

वर्णसमाम्नायस्य च ॥ ३ ॥

तत्र-

## औदन्ताः स्वराः ।१।१।४।

औकारावसाना वर्णाः
स्वरसंज्ञाः स्युः ।

अ आ

| | |
|---|---|
| इ ई | लृ ॡ |
| उ ऊ | ए ऐ |
| ऋ ॠ | ओ औ ॥ ४ ॥ |

## एक-द्वि-त्रिमात्रा
## ह्रस्व-दीर्घ-प्लुताः ।१।१।५।

मात्रा कालविशेषः ।

एक-द्वि-त्रि-उच्चारणमात्राः
औदन्ता वर्णाः
यथासङ्ख्यं
ह्रस्व-दीर्घ-प्लुतसंज्ञाः स्युः ।

अ इ उ ऋ ऌ,
आ ई ऊ ॠ ॡ
ए ऐ ओ औ,
आ ३ ई ३ ऊ ३ इत्यादि ॥५॥

## अनवर्णा नामी । १ । १ । ६ ।

अवर्णवर्जा:
औदन्ता वर्णाः
नामिसंज्ञाः स्युः ।

| | |
|---|---|
| इ ई | ऌ ॡ |
| उ ऊ | ए ऐ |
| ऋ ॠ | ओ औ ॥ ६ ॥ |

## ॡदन्ताः समानाः । १ । १ । ७ ।

ॡकारावसानाः
वर्णाः
समानाः स्युः ।

अ आ

इ ई | ऋ ॠ

उ ऊ | ऌ ॡ ॥ ७ ॥

## ए ऐ ओ औ सन्ध्यक्षरम् । १ । १ । ८ ।

ए ऐ ओ औ
इत्येते
सन्ध्यक्षराणि स्युः ॥ ८ ॥

## अं–अः अनुस्वार–विसर्गौ । १ । १ । ९ ।

अकारौ उच्चारणार्थौ ।
'अं' इति
नासिक्यो वर्णः ।
'अः' इति च
कण्ठ्यः ।
एतौ यथासङ्ख्यम्
अनुस्वार–विसर्गौ स्याताम् ॥ ९ ॥

कादिर्व्यञ्जनम् । १ । १ । १० ।

कादिर्वर्णो
हपर्यन्तो
व्यञ्जनं स्यात् ।

क ख ग घ ङ,
च छ ज झ ञ,
ट ठ ड ढ ण,
त थ द ध न,
प फ ब भ म,
य र ल व,
श ष स ह ॥ १० ॥

अपञ्चमान्तस्थो धुट् । १ । १ । ११ ।

वर्ग-पञ्चमान्तस्थावर्ज्जः
कादिर्वर्णो
धुट् स्यात् ।

क ख ग घ,
च छ ज झ,
ट ठ ड ढ,

त थ द ध,

प फ ब भ,

श ष स ह ॥ ११ ॥

पञ्चको वर्गः । १ । १ । १२ ।

कादिषु वर्णेषु

यो यः

पञ्चसङ्ख्यापरिमाणो

वर्णः

स

वर्गः स्यात् ।

क ख ग घ ङ,

च छ ज झ ञ,

ट ठ ड ढ ण,

त थ द ध न,

प फ ब भ म ॥ १२ ॥

आद्य-द्वितीय-श-ष-सा अघोषाः । १ । १ । १३ ।

वर्गाणां आद्य-द्वितीया वर्णाः

शषसाश्च अघोषाः स्युः ।

क ख,
च छ,
ट ठ,
त थ,
प फ,
श ष स ॥ १३ ॥

## अन्यो घोषवान् । १ । १ । १४ ।

अघोषेभ्योऽन्यः
कादिर्वर्णो
घोषवान् स्यात् ।
ग घ ङ,
ज झ ञ,
ड ढ ण,
द ध न,
ब भ म,
य र ल व, ह ॥ १४ ॥

**य-र-ल-वा अन्तस्थाः । १ । १ । १५ ।**

एते अन्तस्थाः स्युः ॥ १५ ॥

**अं-अः ≍क )( प-श-ष-साः**
**शिट् । १ । १ । १६ ।**

अ-क-पा उच्चारणार्थाः,
अनुस्वारविसर्गौ
वज्र-गजकुम्भाकृती च वर्णौ
श-ष-साश्च
शिटः स्युः ॥ १६ ॥

**तुल्य-स्थाना-ऽऽस्यप्रयत्नः स्वः ।१।१।१७।**

स्थानं कण्ठादि ।
" अष्टौ स्थानानि वर्णानां, उरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च, नासिकौष्ठौ च तालु च ॥१॥

आस्ये प्रयत्नः=
=आस्यप्रयत्नः,
=स्पृष्टतादिः,

तुल्यौ

वर्णान्तरेण सदृशौ

स्थाना-ऽऽस्यप्रयत्नौ

यस्य

स वर्णः

तं प्रति

स्वः स्यात् ।

तत्र त्रयोऽकारा

उदात्ता-नुदात्त-स्वरिताः

प्रत्येकं

सानुनासिक-निरनुनासिकभेदात्

षट् ।

एवं दीर्घ-प्लुताः

इति अष्टादश भेदा अवर्णस्य,

ते सर्वे

कण्ठस्थानाः

विवृतकरणाः

परस्परं स्वाः ।

एवमिवर्णाः

तावन्तः

तालव्याः

विवृतकरणाः

परस्परं स्वाः ।

उवर्णाः

ओष्ठ्या

विवृतकरणाः

स्वाः ।

ऋवर्णाः

मूर्द्धन्या

विवृतकरणाः

परस्परं स्वाः ।

लृवर्णा दन्त्याः

विवृतकरणाः

परस्परं स्वाः ।

" सन्ध्यक्षराणां

ह्रस्वाः

न सन्ति "

इति

तानि

प्रत्येकं

द्वादशभेदानि ।

तत्र–

–एकाराः तालव्याः

विवृततराः

परस्परं स्वाः ।

–ऐकाराः

तालव्याः

अतिविवृततराः

परस्परं स्वाः ।

–ओकाराः

ओष्ठ्याः

विवृततराः

परस्परं स्वाः ।

-औकारा
ओष्ठ्याः
अतिविवृततराः
परस्परं स्वाः ।
वर्ग्याः
पञ्च पञ्च
परस्परं स्वाः ।
यलवानां
अनुनासिकोऽननुनासिकश्च
द्वौ भेदौ
परस्परं स्वौ ॥ १७ ॥

स्यौजस्मौशस्-
टा-भ्यां-भिस्
ङे-भ्यां-भ्यस्
ङसि-भ्यां-भ्यस्
ङसोसाम्
ङ्योस्सुपां
त्रयी त्रयी
प्रथमाऽऽदिः ।१।१।१८।

स्यादीनां प्रत्ययानां
त्रयी त्रयी
यथासङ्ख्यं

प्रथमा
द्वितीया
तृतीया
चतुर्थी
पञ्चमी
षष्ठी
सप्तमी च
स्यात् ॥ १८ ॥

## स्त्यादिर्विभक्तिः । १ । १ । १९ ।

'—' इति च
'ति' इति च
उत्सृष्टानुबन्धस्य
तिवश्च
ग्रहणम् ।
ादयः तिवादयश्च
सुप्-स्यामहीपर्यन्ता
विभक्तयः स्युः ॥ १९ ॥

नान्तं नाम
क्ये परे
पदं स्यात् ।
राजीयति, राजायते, चर्मायति ॥ २२ ॥

न स्तं मत्वर्थे । १ । १ । २३ ।

सान्तं तान्तं च
नाम
मत्वर्थे परे
पदं न स्यात् ।
यशस्वी, तडित्वान् ॥ २३ ॥

मनु-र्नभो-ऽङ्गिरो वति । १ । १ । २४

एतानि
वति परे
पदं न स्युः ।
मनुष्वत् ,

वृत्त्यन्तोऽसषे । १ । १ । २५ ।

परार्थाभिधायी समासादिः वृत्तिः ।
तस्या अन्तः-अवसानं
पदं न स्यात्,
असषे,
सस्य तु पत्वे पदमेव ।
परमदिवौ, बहुदण्डिनौ
असष इति किम्?
दधिसेक् ॥ २५ ॥

सविशेषणमाख्यातं वाक्यम् । १ । १ । २६ ।

प्रयुज्यमानैः
अप्रयुज्यमानैर्वा
विशेषणैः सहितं
प्रयुज्यमानं
अप्रयुज्यमानं वा
आख्यातं

धर्म्मो वो रक्षतु,
लुनीहि ३
पृथुकाँश्च खाद,
शीलं ते स्वम् ॥ २६ ॥

## अधातुविभक्तिवाक्यमर्थवन्नाम ।१।१।२७।

धातु-
विभक्त्यन्त-
वाक्य वर्ज्जम्-
अर्थवच्छब्दरूपं
नाम स्यात् ।
वृक्षः, स्वः, धवश्च ।
अधातुविभक्तिवाक्यमिति किम् ?
अहन्, वृक्षान्, साधुर्धर्म्मं ब्रूते ॥ २७॥

## शिर्घुट् ।१।१।२८।

जस्शसादेशः शिः
घुट् स्यात् ।

## पुं-स्त्रियोः स्यमौ-जस् । १ । १ । २९ ।

स्यादयः
पुंस्त्रीलिङ्गयोः
घुटः स्युः ।
राजा, राजानौ, राजानः, राजानम्, राजानौ,
सीमा, सीमानौ, सीमानः,
सीमानम्, सीमानौ ॥ २९ ॥

## स्वराऽऽदयोऽव्ययम् । १ । १ । ३० ।

स्वरादयः
अव्ययानि
स्युः ।
स्वर्, अन्तर्, प्रातर् इत्यादि ॥ ३० ॥

## चाऽऽदयोऽऽसत्त्वे । १ । १ । ३१ ।

अद्रव्ये वर्त्तमानाः
चादयः
अव्ययानि स्युः ।
वृक्षश्च इत्यादि ॥ ३१ ॥

## अधण्तस्वाद्या शसः । १ । १ । ३२ ।

धण्वर्ज्जाः
तस्वादयः शस्पर्यन्ताः
ये प्रत्ययाः
तदन्तं नाम
अव्ययं स्यात् ।
देवा अर्जुनतोऽभवन्, ततः, तत्र, बहुशः ।
अधणिति किम् ? पथि द्वैधानि ॥ ३२ ॥

## विभक्ति-थमन्त-तसाद्याभाः ।१।१।३३।

विभक्त्यन्ताभाः
थमन्तसान-तसादिप्रत्ययान्ताभाश्च
अव्ययानि स्युः ।

### वत्-तस्याम् । १ । १ । ३४ ।

वत्-तसि-आम्प्रत्ययान्तं

अव्ययं स्यात् ।

मुनिवद् वृत्तम्, उरस्तः, उच्चैस्तराम् ॥ ३४ ॥

### क्त्वा-तुमम् । १ । १ । ३५ ।

क्त्वा-तुम्-अम्प्रत्ययान्तं

अव्ययं स्यात् ।

कृत्वा, कर्त्तुम्, यावज्जीवं अदात् ॥ ३५ ॥

### गतिः । १ । १ । ३६ ।

गतिसंज्ञं

अव्ययं स्यात् ।

अदः कृत्य ।

"अतः कृ-कमि....(२-३-५)" इत्यादिना

रः सो न स्यात् ॥ ३६ ॥

**डत्यतु संख्यावत् । १ । १ । ३९ ।**

डत्यन्तं

अत्वन्तं च

संख्याकार्यभाक् स्यात् ।

कतिकः, यावत्कः ॥ ३९ ॥

**बहु-गणं भेदे । १ । १ । ४० ।**

बहुगणशब्दौ

भेदवृत्ती

सङ्ख्यावत् स्याताम् ।

बहुकः, गणकः ।

भेद इति किम् ?

वैपुल्ये सङ्घे च मा भूत् ॥ ४० ॥

**क-समासेऽध्यर्द्धः । १ । १ । ४१ ।**

अध्यर्द्धशब्दः

के प्रत्यये समासे च विधेये

सङ्ख्यावत् स्यात् ।

अध्यर्द्धकम्, अध्यर्द्धशूर्पम् ॥ ४१ ॥

अर्धपूर्वपदः पूरणः । १ । १ । ४२ ।

अर्धपूर्वपदः

पूरणप्रत्ययान्तः

के प्रत्यये समासे च कार्ये

सङ्ख्यावत् स्यात् ।

अर्धपञ्चमकम् , अर्धपञ्चमशूर्पम् ॥ ४२ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां
सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासन-
लघुवृत्तौ प्रथमस्याध्यायस्य
प्रथमः पादः समाप्तः ॥ १ । १ ॥

वा स्यातां,
तौच–ऋकारऌकारौ
ऋऌभ्यां सह
वा स्याताम् ।
ऋता–पितॄषभः,
पक्षे
पितृ ऋषभः, पितृषभः ।
ऌता–होतॢ्ऌकारः,
पक्षे
होतृ ऌकारः, होतृकारः ।
तौ च–
पितृषभः होतॢकारः,
पक्षे पूर्ववत् ॥ ४ ॥

**ऋस्तयोः । १ । २ । ५ ।**

तयोः पूर्वस्थानिनोः ऌकार–ऋकारयोः
यथासङ्ख्यं
ऋऌभ्यां सह
ॠ इति दीर्घः स्यात् ।
ॠषभः, होतॄकारः ॥ ५ ॥

प्रार्णम्, दशार्णम्, ऋणार्णम्,
वसनार्णम्. कम्बलार्णम्, वत्सरार्णम्,
वत्सतरार्णम् ॥ ७ ॥

## ऋते तृतीयासमासे ।१।२।८।

अवर्णस्य
ऋते परे
तृतीयासमासे
ऋता सह
आर् स्यात् ।
शीतार्त्तः ।
तृतीयासमास इति किम्? परमर्त्तः ।
समास इति किम्? दुःखेनर्त्तः ॥ ८ ॥

## ऋत्यारुपसर्गस्य १।।२।९।

उपसर्गस्थस्यावर्णस्य
ऋकारादौ धातौ परे
ऋता सह
आर् स्यात् ।
प्रार्च्छति, परार्च्छति ॥ ९ ॥

तवैषा, खट्वैषा,
तवैन्द्री, सैन्द्री,
तवौदनः, तवौपगवः ॥ १२ ॥

ऊटा । १ । २ । १३ ।

अवर्णस्य
परेण ऊटा सह
औः स्यात् ।
धौतः, धौतवान् ॥ १३ ॥

प्रस्यैषैष्योढोढ्यूहे स्वरेण । १ । २ । १४ ।

प्रावर्णस्य
एषादिषु परेषु
परेण स्वरेण सह
ऐ औ स्याताम् ॥
प्रैषः, प्रैष्यः,
प्रौढः, प्रौढिः,
प्रौहः ॥ १४ ॥

बिम्बोष्ठी, बिम्बौष्ठी,
स्थूलोतुः, स्थूलौतुः ।
समास इति किम्? हे पुत्रौष्ठं पश्य ॥१७॥

## ओमाङि । १ । २ । १८ ।

अवर्णस्य
ओमि आङादेशे च परे
लुक् स्यात् ।
अद्योम्, सोम्,
आ+ऊढा=ओढा,
अद्योढा, सोढा ॥ १८ ॥

## उपसर्गस्यानिणेधेदोति । १ । २ । १९ ।

उपसर्गाऽवर्णस्य
इणेधिवर्ज्जे एदादौ ओदादौ च धातौ परे
लुक् स्यात् ।
प्रेलयति, परेलयति,
प्रोषति, परोषति,
अनिणेधू इति किम्? उपेति, प्रेधते ॥१९॥

## वा नाम्नि ।१।२।२०।

नामावयवे एदादौ ओदादौ च धातौ परे
उपसर्गाऽवर्णस्य
लुग् वा स्यात् ।
उपेकीयति, उपैकीयति ।
प्रोपधीयति, प्रौपधीयति ॥ २० ॥

## इवर्णादेरस्वे स्वरे यवरलम् ।१।२।२१।

इ-उ-ऋ-लृवर्णानाम्
अस्वे स्वरे परे
यथासङ्ख्यं
य-व-र-ल-इत्येते स्युः ।
दध्यत्र, नद्येषा,
मध्वत्र, वध्वासनं,
पित्रर्थः, आदिः,
लिन्, लाकृतिः ॥ २१ ॥

## ह्रस्वोऽपदे वा ।१।२।२२।

इवर्णाऽऽदीनाम्
अस्वे स्वरे परे
ह्रस्वो वा स्यात्,
न चेत् निमित्तनिमित्तिनौ
एकत्र पदे स्याताम् ।
नदि एषा, नद्येषा ।
मधु अत्र, मध्वत्र ।
अपद इति किम् ? नद्यौ, नद्यर्थः ॥ २२ ॥

## एदैतोऽयाय् ।१।२।२३।

एदैतोः
स्वरे परे
यथासङ्ख्यं
अय् आय्
इत्येतौ स्याताम् ।

नयनम्,

वृक्षयेव,

नायकः,

रायैन्द्री ॥ २३ ॥

## ओदौतोऽवाव् । १ । २ । २४ ।

ओदौतोः

स्वरे परे

यथासङ्ख्यं

अव्-आव्-

इत्येतौ स्याताम् ।

लवनम्,

पटवोतुः,

लावकः

गावौ ॥ २४ ॥

## य्यक्ये । १ । २ । २५ ।

ओदौतोः

क्यवर्जे यादौ प्रत्यये परे

यथासङ्ख्यम्

अव्-आवौ स्याताम् ।

गव्यति, गव्यते,

नाव्यति, नाव्यते,

लव्यम्, लाव्यम्,

अक्य इति किम्!

उपोयते, औयत ॥ २५ ॥

## ऋतो रस्तद्धिते । १ । २ । २६ ।

ऋकारस्य

यादौ तद्धिते परे

रः स्यात् ।

पित्र्यम् ।

तद्धित इति किम्? कार्यम् ॥ २६ ॥

## एदोतः पदान्तेऽस्य लुक् ।।१।२।३७।

एदोद्भ्यां पदान्तस्थाभ्यां परस्य

अकारस्य

लुक् स्यात् ।

तेऽत्र, पटोऽत्र ।

पदान्त इति किम् ? नयनम् ॥२७॥

## गोर्नाम्न्यवोऽक्षे ।१।२।२८।

गोरोतः पदान्तस्थस्य

अक्षे परे

संज्ञायां

अव इति स्यात् ।

गवाक्षः ।

नाम्नीति किम् ? गोऽक्षाणि ॥ २८ ॥

## स्वरे वा ऽनक्षे । १ । २ । २९ ।

गोरोतः पदान्तस्थस्य
स्वरे परे
अव इति
वा स्यात्,
स चेत् स्वरः
अक्षस्थो न स्यात् ।
गवाग्रम्, गोऽग्रम् ।
गवेशः, गवीशः ।
अनक्ष इति किम्? गोऽक्षम् ।
ओत इति किम्? चित्रग्वर्थः ॥२९॥

## इन्द्रे । १ । २ । ३० ।

गोरोतः पदान्तस्थस्य
इन्द्रस्थे स्वरे परे
अव इति स्यात् ।
गवेन्द्रः ॥ ३० ॥

## चादिः स्वरो ऽनाङ् । १ । २ । ३६ ।

आङ्वर्ज्जश्चादिः स्वरः

स्वरे परे

असन्धिः स्यात् ।

अ अपेहि,

इ इन्द्रम् पश्य,

उ उत्तिष्ठ,

आ एवं किल मन्यसे,

आ एवं नु तत् ।

अनाङ् इति किम् ? आ+इहि=एहि ॥३६॥

## ओदन्तः । १ । २ । ३७ ।

ओदन्तश्चादिः

स्वरे परे

असन्धिः स्यात् ।

अहो अत्र ॥ ३७ ॥

## सौ नवेतौ । १ । २ । ३८ ।

सिनिमित्त ओदन्त

इतौ परे

असन्धिर्वा स्यात् ।

पटो इति, पटविति ॥ ३८ ॥

## ऊँ चोञ् । १ । २ । ३९ ।

उञ् चादिः

इतौ परे

असन्धिर्वा स्यात्,

असन्धौ च उञ्

ऊँ इति दीर्घोऽनुनासिको

वा स्यात् ।

उँ इति. ऊँ इति, विति ॥ ३९ ॥

अञ्वर्गात् स्वरे वो ऽसन् । १ । २ । ६

अवर्जवर्गेभ्यः परः उञ्
स्वरे परे
वो वा स्यात्,
सचासन् ।
कुङ्ङ्वास्ते, कुङ्ङु आस्ते ।
असत्वाद्द्वित्वम् ॥ ४० ॥

अ–इ–उ वर्णस्यान्तेऽनु–
नासिकोऽनीनादेः । १ । २ । ४१ ।

अ–इ–उ–वर्णानाम्
अन्ते=विरामे
अनुनासिको वा : स्यात्,
न चेदेते
ईदूदेद् द्विवचनम्' इत्यादि-सूत्रसम्बन्धिनः
स्युः ।

सामँ, साम ।

खट्वाँ, खट्वा ।

दधिँ, दधि ।

कुमारीँ, कुमारी ।

मधुँ, मधु ।

अनीदादेरिति किम् ।

अग्नी, अमी, किमु ॥ ४१ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां
सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासन-
लघुवृत्तौ प्रथमस्याध्यायस्य
द्वितीयःपादः समाप्तः ॥ १ । २ ॥

प्रथमाध्यायस्य—

# तृतीयः पादः

## तृतीयस्य पञ्चमे । १ । ३ । १ ।

वेति

पदान्त इति

अनुनासिक इति च

अनुवर्त्तते ।

वर्गतृतीयस्य पदान्तस्थस्य पञ्चमे परे

अनुनासिको वा स्यात् ।

वाङ्ङवते, वाग्ङवते ।

ककुम्मण्डलम्, ककुब्मण्डलम् ॥ १ ॥

## प्रत्यये च । १ । ३ । २ ।

पदान्तस्थस्य तृतीयस्य
प्रत्यये पञ्चमे परे
अनुनासिको नित्यं स्यात् ।
वाङ्मयम्, षण्णाम् ।
च उत्तरत्र वा अनुवृत्त्यर्थः ॥ २ ॥

## ततो हश्चतुर्थः । १ । ३ । ३ ।

पदान्तस्थात् ततः=तृतीयात् परस्य हस्य
पूर्वसवर्गश्चतुर्थो
वा स्यात् ।
वाग्घीनः, वाग्हीनः ।
ककुब्भासः, ककुब्-हासः ॥ ३ ॥

## प्रथमादधुटि शश्छः । १ । ३ । ४ ।

पदान्तस्थात् प्रथमात् परस्य शस्य
अधुटि परे
छो वा स्यात् ।

वाक्-छूरः-वाक्-शूरः ।

त्रिष्टुप्-छ्रुतम्, त्रिष्टुप्-श्रुतम् ।

अधुटीति किम्? वाक् श्च्योतति ॥ ४ ॥

**रः क-ख-प-फयोः ≍क≍पौ । १ । ३ । ५ ।**

पदान्तस्थस्य रस्य

क-खे प-फे च परे

यथासङ्ख्यं

≍क≍पौ

वा स्याताम् ।

क≍करोति, कःकरोति ।

क≍खनति, कःखनति ।

क≍पचति, कःपचति ।

क≍फलति, कःफलति ॥ ५ ॥

## शषसे शषसं वा ।१।३।६।

पदान्तस्थस्य रस्य
शु-ष-सेषु परेषु
यथासङ्ख्यं श-ष-सा वा स्युः ।
कश्शेते, कः शेते ।
कष्षण्ढः, कः षण्ढः ।
कस्साधुः, कःसाधुः ॥ ६ ॥

## च-ट-ते स-द्वितीये ।१।३।७।

पदान्तस्थस्य रस्य
च-ट-तेषु सद्वितीयेषु परेषु
यथासङ्ख्यं श-ष-साः
नित्यं स्युः ।
कश्चरः, कश्छन्नः,
कष्टः, कष्ठः
कस्तः कस्थः ॥ ७ ॥

भवांष्टकारः, भवाँष्टकारः ।

भवांस्तनुः, भवाँस्तनुः ।

भवांस्थुडति, भवाँस्थुडति ।

अप्रशान् इति किम् ? प्रशाञ्चरः ।

अ-धुट्पर

इति किम् ? भवान्त्सरुकः ॥ ८ ॥

## पुमोऽशिट्यघोषेऽख्यागि रः ।१।३।९।

'पुम्' इति

पुंसः संयोग-लुक्यनुकरणम् ।

अ-धुट्परे अघोषे

शिट्-ख्यागिवर्जे परे

'पुम्' इत्येतस्य

रः स्यात् ।

अनुस्वारा-ऽनुनासिकौ च

पूर्वस्य ।

पुंस्कामा, पुँस्कामा ।

अशिटीति किम् ? पुंशिरः ।

अघोषे इति किम् ? पुंदासः ।

अख्यागीति किम् ? पुंख्यातः ।

अ-धुट्पर इत्येव ! पुंक्षारः ॥९॥

## नॄनः पेषु वा । १ । ३ । १० ।

' नॄन् ' इति शसन्तस्याऽनुकरणम् ।

नॄनः

पे परे

रो वा स्यात् ।

अनुस्वाराऽनुनासिकौ च

पूर्वस्य ।

नॄंःपाहि, नॄँःपाहि ।

नॄंःपाहि, नॄँःपाहि ।

नॄन्पाहि ॥ १० ॥

## द्विः कानः कानि सः । १ । ३ । ११ ।

'कान' इति
किमः शसन्तस्याऽनुकरणम् ।
द्विरुक्तस्य कानः
कानि परे
सः स्यात् ।
अनुस्वाराऽनुनासिकौ च
पूर्वस्य ।
कांस्कान्, कँास्कान् ।
द्विरिति किम् ?
कान् कान् पश्यति ॥ ११ ॥

## स्सटि समः । १ । ३ । १२ ।

समः
स्सटि परे
सः स्यात् ।

अनुस्वारा-ऽनुनासिकौ च
पूर्वस्य ।
संस्कर्त्ता, सँस्कर्त्ता ।
स्पर्शीति किम् ? संकृतिः ॥ १२ ॥

## लुक् । १ । ३ । १३ ।

समः
स्सटि परे
लुक् स्यात् ।
सस्कर्त्ता ॥ १३ ॥

## तौ मु-मो व्यञ्जने स्वौ । १ । ३ । १४ ।

मो=म्-र्वाऽऽगमस्य
पदान्तस्थस्य च मस्य
व्यञ्जने परे
तस्यैव स्वौ
तौ=अनुस्वाराऽनुनासिकौ
क्रमेण स्याताम् ।

चंक्रम्यते चङ्क्रम्यते ।

वंवम्यते वव्ँम्यते ।

त्वं करोषि, त्वङ्करोषि ।

कं वः कँव्वः ॥ १४ ॥

## म-न-य-व-ल-परे हे ।१।३।१५।

म-न-य-व-ल-परे हे

पदान्तस्थस्य मस्य

अनुस्वाराऽनुनासिकौ

स्वौ

क्रमात् स्याताम् ।

किं ह्मलयति, किम् ह्मलयति ।

किं ह्नुते, किन् ह्नुते ।

किं ह्यः, कियँ ह्यः ।

किं ह्वलयति, किवँ ह्वलयति ।

किं ह्लादते, किलँ ह्लादते ॥१५॥

## सम्राट् । १ । ३ । १६ ।

समो मस्य

राजौ क्विबन्ते

अनुस्वाराऽभावः स्यात् ।

सम्राट्, सम्राजौ ॥ १६ ॥

## ङ्-णोः क-टावन्तौ शिटि नवा ।१।३।१७।

पदान्तस्थयो-र्ङ-णयोः

शिटि परे

यथासङ्ख्यं क-टावन्तौ

वा स्याताम् ।

प्राङ्क् छेते प्राङ् शेते ।

सुगण्ट् छेते, सुगण्ट् शेते, सुगण् शेते ॥१७॥

ङ्नः सः त्सोऽश्चः । १ । ३ । १८ ।

पदान्तस्थाभ्यां ङनाभ्यां परस्य

सस्य

'त्स' इति ताऽऽदिः सो

वा स्यात्,

अश्चः=

चाऽवयवश्चेत्

सो न स्यात् ।

षड्त्सीदन्ति, षड् सीदन्ति ।

भवान्त्साधुः, भवान् साधुः ।

अश्च इति किम् ?

षड् श्चोतति, भवान् श्चोतति ॥ १८ ॥

## नः शि ञ्च् । १ । ३ । १९ ।

पदान्तस्थस्य नस्य

शे परे

ञ्च् वा स्यात्,

अश्वः ।

भवाञ्च् छूरः, भवाञ्च् शूरः, भवाञ्शूरः ।

अश्व इत्येव ? भवाञ् श्च्योतति ॥१९॥

## अतोऽति रोरुः । १ । ३ । २० ।

आत् परस्य

पदान्तस्थस्य रोः

अति परे

उर्नित्यं स्यात् ।

कोऽर्थः ॥ २० ॥

## घोषवति । १ । ३ । २१ ।

आत् परस्य
पदान्तस्थस्य रोः
घोषवति परे
उः स्यात् ।
धर्म्मो जेता ॥ २१ ॥

## अवर्ण-भो-भगोऽघोर्लुगसन्धिः ।१।३।२२।

अवर्णाद्
भो-भगो-अघोभ्यश्च परस्य
पदान्तस्थस्य रोः
घोषवति परे
लुक् स्यात्,
स च न सन्धिहेतुः ।
देवा यान्ति,
भो यासि, भगो हस, अघो वद ॥२२॥

व्योः । १ । ३ । २३ ।

अवर्णात् परयोः

पदान्तस्थयो-र्व-ययोः

घोषवति परे

लुक् स्यात्,

स चाऽसन्धिः ।

वृक्षवृश्चम् अव्ययञ्च आचक्षाणौ

वृक्षव्-अव्यय्,

वृक्ष याति, अव्य याति ॥२३॥

स्वरे वा । १ । ३ । २४ ।

अवर्ण-भो-भगोऽघोभ्यः परयोः

पदान्तस्थयोः

व-ययोः

स्वरे परे

लुग् वा स्यात्,

स चाऽसन्धिः ।

| | |
|---|---|
| पट इह, | पटविह । |
| वृक्षा इह, | वृक्षाविह । |
| त आहुः, | तयाहुः । |
| तस्मा इदम्, | तस्मायिदम् । |
| भो अत्र, | भोयत्र । |
| भगो अत्र, | भगोयत्र । |
| अघो अत्र, | अघोयत्र ॥२४॥ |

## अस्पष्टाववर्णात्त्वनुञि वा ।१।३।२५।

अवर्ण-भो-भगो-अघोभ्यः परयोः

पदान्तस्थयोः

व-ययोः

अस्पष्टौ=ईषत्स्पृष्टतरौ व-यौ

स्वरे परे स्याताम्,

अवर्णात्तु-परयोः

व्योः

उञ्-वर्ज्जे स्वरे

असपष्टौ वा स्याताम् ।

पटवुँ, असावुँ, कयुँ, देवायुँ,

भोयॅत्र, भगोयॅत्र, अघोयॅत्र ।

अवर्णात्त्वनुञि वा-

पटविह, पटविहँ ।

असाविन्दुः असाविन्दुः ।

तयिह, तयिहँ ।

तस्मायिदम्, तस्मायिँदम् ॥ २५ ॥

**रोर्यः । १ । ३ । २६ ।**

अवर्ण-भो-भगो-अघोभ्यः घरस्य

पदान्तस्थस्य रोः

स्वरे परे यः स्यात् ।

कयास्ते, देवायासते,

भोयत्र,

भगोयत्र,

अघोयत्र ॥ २६ ॥

## ह्रस्वाद् ङ-ण-नो द्वे । १ । ३ । २७ ।

ह्रस्वात् परेषां

पदान्तस्थानाम् ङ-ण-नानाम्

स्वरे परे

द्वे रूपे स्याताम् ।

कुङ्ङास्ते, सुगण्णिह, कृपन्नास्ते ॥२७॥

## अनाङ्माङो दीर्घाद् वा च्छः ।१।३।२८।

आङ्-माङ्वर्ज-दीर्घात्

पदान्तस्थात् परस्य

छस्य

द्वे रूपे वा स्याताम् ।

कन्याच्छत्रम्, कन्याछत्रम् ।

अनाङ्माङिति किम् ?

आच्छाया, मा च्छिदत् ॥ २८ ॥

अ-दीर्घाद् विरामैकव्यञ्जने । १ । ३ । ३२ ।

अ-दीर्घात् स्वरात् परस्य
र-ह-स्वर-वर्जस्य वर्णस्य
विरामे अ-संयुक्तव्यञ्जने च परे
अनु
द्वे रूपे वा स्याताम् ।
त्वक्क्, त्वक् ।
दद्ध्यत्र, दध्यत्र ।
गो३त्त्रात, गो३त्रात ।
अ-र्ह-स्वरस्येत्येव ?
वर्या, वर्ह्य, तितउ ॥ ३२ ॥

अ-ञ्-वर्गस्यान्तस्थातः । १ । ३ । ३३ ।

अन्तस्थातः परस्य
ञ्-वर्ज-वर्गस्य
अनु द्वे रूपे

## ततोऽस्याः । १ । ३ । ३४ ।

ततः=अ-ञ्-वर्गात् परस्याः
अस्याः=अन्तस्थायाः
द्वे रूपे वा स्याताम् ।
दध्य्यत्र, दध्यत्र ॥ ३४ ॥

## शिटः प्रथम द्वितीयस्य ।१। ।३। ।३५।

शिटः परयोः
प्रथम-द्वितीययोः
द्वे रूपे
वा स्याताम् ।
त्वं क्करोपि-त्वं करोपि ।
त्वं क्खनसि-त्वं खनसि ।।३५।।

रात् परस्य शिटः
स्वरे परे
द्वे रूपे
न स्याताम् ।
दर्शनम् ॥ ३७ ॥

# पुत्रस्याऽऽदिन्-पुत्रादिन्याक्रोशे ।१।३।३८

आदिनि पुत्रादिनि च परे

पुत्रस्थस्य तस्य

आक्रोशविषये

द्वे रूपे

न स्याताम् ।

पुत्राऽदिनी त्वमसि पापे !,

पुत्र-पुत्राऽदिनी भव ।

आक्रोश इति किम् ?

पुत्त्रादिनी शिशुमारी, पुत्रादिनीति वा ।

पुत्त्र-पुत्रादिनी नागी,

पुत्र-पुत्रादिनीति वा ॥ ३८ ॥

ं धुड्वर्गेऽन्त्योऽपदान्ते ।१।३।३९।

अ-पदान्तस्थानाम् म-नानाम्

धुटि वर्गे परे

निमित्तस्यैव

अन्त्यः अनु स्यात् ।

गन्ता, शङ्किता, कम्पिता ।

धुट् इति किम्? आहन्महे ।

धुट्-वर्ग इति किम्? गम्यते ।

अ-पदान्त इति किम्?

भवान् करोति ॥ ३९ ॥

शिड्-हेऽनुस्वारः ।१।३।४०।

अ-पदान्तस्थानाम् म्नाम्

शिटि हे च परे

अनुस्वारोऽनु स्यात् ।

पुंसि, दंशः, बृंहणम् ॥ ४० ॥

रो रे लुग् दीर्घश्चाऽदिदुतः । १ । ३ । ४१ ।

रस्य रे परे

अनु लुक् स्यात्,

अ-इ-उ-नाञ्च दीर्घः ।

पुना रात्रिः, अग्नीरथेन, पटूराजा ।

अनु इत्येव ? अहोरूपम् ॥ ४१ ॥

ढस्तड्ढे । १ । ३ । ४२ ।

तन्निमित्ते ढे परे

ढस्य

अनु लुक् स्यात्,

दीर्घश्चाऽदिदुतः ।

माढिः, लीढम्, गूढम्,

तड्ढ इति किम् ?

मधुलिड् ढौकते ॥ ४२ ॥

सहि-वहेरोच्चाऽवर्णस्य । १ । ३ । ४३ ।

सहि-वह्योर्ढस्य

तद्ढे परे

अनु लुक् स्यात्,

ओच्चाऽवर्णस्य ।

सोढा, उदवोढाम् ॥ ४३ ॥

उदः स्था-स्तम्भः सः । १ । ३ । ४४ ।

उदः परयोः

स्था-स्तम्भोः

सस्य लुक् स्यात् ।

उत्थाता-उत्तम्भिता ॥ ४४ ॥

तदः सेः स्वरे पादार्था । १ । ३ । ४५ ।

तद् परस्य सेः

स्वरे परे

लुक् स्यात्,

सा चेत् पादपूरणी स्यात् ।

सैष दाशरथी रामः,

सैष राजा युधिष्ठिरः ।

पादार्था इति किम् ?

स एष भरतो राजा ॥ ४५ ॥

## एतदश्च व्यञ्जनेऽ-नग्-नञ्-समासे । १ । ३ । ४६ ।

एतदः तदश्च परस्य

सेः

व्यञ्जने परे

लुक् स्यात्,

अकि नञ् समासे न ।

एष दत्ते ।

स लाति ।

अ-नग्-नञ्समास इति किम् ?

एपकः कृती ।

सको याति ।

अनेपो याति ।

असो याति ॥ ४६ ॥

**व्यञ्जनात् पञ्चमाऽन्तस्थायाः सरूपे वा । १ । ३ । ४७ ।**

व्यञ्जनात् परस्य

पंचमस्याऽन्तस्थायाश्च

सरूपे वर्णे परे

लुग् वा स्यात् ।

कुञ्चो ङ्-ङौ=

=क्रुङौ, क्रुङ्ङौ ।

आदित्यो देवता अस्य=

=आदित्यः, आदित्य्यः ।

सरूप इति किम् ? वर्ण्यते ॥ ४७ ॥

## धुटो धुटि स्वे वा । १ । ३ । ४८

व्यञ्जनात् परस्य

धुटो

धुटि स्वे परे

लुग् वा स्यात् ।

शिण्ढि, शिण्ड्ढ ।

स्व इति किम्? तर्सा, दर्मा ॥ ४८ ॥

## तृतीयस्तृतीयचतुर्थे । १ । ३ । ४९ ।

तृतीये चतुर्थे च परे

धुटः

तृतीयः स्यात् ।

मज्जति, दोग्धा ॥ ४९ ॥

## अघोषे प्रथमोऽशिटः । १ । ३ । ५० ।

अघोषे परे

शिट्-वर्जस्य धुटः
प्रथमः स्यात् ।
वाक्-पूता ।
अशिट इति किम् ? पयस्सु ॥ ५० ॥

## विरामे वा । १ । ३ । ५१ ।

विरामस्थस्य
अशिटो धुटः
प्रथमो वा स्यात् ।
वाक्, वाग् ॥ ५१ ॥

## न सन्धिः । १ । ३ । ५२ ।

उक्तो वक्ष्यमाणश्च सन्धिः
विरामे
न स्यात् ।
दधि अत्र, तद् लुनाति ॥५२॥

## रः पदान्ते विसर्गस्तयोः । १ । ३ । ५३ ।

पदान्तस्थस्य रस्य
तयोः=विरामा-ऽघोषयोः
विसर्गः स्यात् ।
वृक्षः, स्वः, कःकृती ।
पदान्त इति किम्? इर्त ॥ ५३ ॥

## ख्याति । १ । ३ । ५४ ।

पदान्तस्थस्य रस्य
ख्याति परे
विसर्ग एव स्यात् ।
कः ख्यातः, नमः ख्यात्रे ॥ ५४ ॥

## शिट्यघोषात् । १ । ३ । ५५ ।

अघोषात्परे शिटि
पदान्तस्थस्य रस्य
विसर्ग एव स्यात् ।
पुरुषः त्सरुकः, सर्पिः प्साति,
वासः क्षौमम्, अद्भिः प्सातम् ॥५५॥

व्यत्यये लुग् वा । १ । ३ । ५६ ।

शिटः परोऽघोष इति व्यत्ययः,

तस्मिन् सति

पदान्तस्थस्य रस्य

लुग् वा स्यात् ।

चक्षुश्च्योतति,

चक्षुः श्च्योतति चक्षु श्च्योतति ॥५६॥

अ-रोः सुपि रः । १ । ३ । ५७ ।

रोः अन्यस्य रस्य

सुपि

र एव स्यात् ।

गीर्षु, धूर्षु

अ-रोरिति किम् ? पयस्सु ॥ ५७ ॥

## तवर्गस्य श्चवर्ग-ष्टवर्गाभ्यां योगे च-टवर्गौ ।१।३।६०।

तवर्गस्य

श-चवर्गाभ्यां

ष-टवर्गाभ्यां च योगे

यथासङ्ख्यं

चवर्ग-टवर्गौ स्याताम् ।

तच्शेते, भवाञ्शेते,

तच्चारु तज्जकारेण,

पेष्टा, पूष्णः,

तट्टकारः तण्णकारेण,

ईड्ढे ॥ ६० ॥

## पदान्ताट्टवर्गादनाम्नगरीनवतेः ।१।३।६३।

पदान्तस्थात् टवर्गात् परस्य

नाम्-नगरी-नवति-वर्जस्य

तवर्गस्य

सस्य च

टवर्ग-षौ

न स्याताम् ।

षण्नयं, षण्नयाः, षट्सु ।

अनाम्-नगरी-नवतेरिति किम् ?

षण्णाम्, षण्णगरी, षण्णवतिः ॥ ६३ ॥

## षि तवर्गस्य । १ । ३ । ६४ ।

पदान्तस्थस्य तवर्गस्य

षे परे टवर्गो न स्यात् ।

तीर्थकृत् षोडशः शान्तिः ॥ ६४ ॥

लि लौँ ।१।३।६५।

पदान्तस्थस्य तवर्गस्य

ले परे लौँ स्याताम्,

तल्लूनम्, भवाल्लुँनाति ॥६५॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां
सिद्धहेमचन्द्राभिधानस्वोपज्ञ
शब्दानुशासनलघुवृत्तौ
प्रथमस्याध्यायस्य
तृतीयः पादः समाप्तः ॥१।३॥

प्रथमाध्यायस्य—

# चतुर्थः पादः

## अत आः स्यादौ जस्भ्याम्ये ।१।४।१।

स्यादौ
जसि भ्यामि ये च परे
अकारस्य
आः स्यात् ।
देवाः, आभ्याम्, सुखाय ।

स्यादाविति किम् ?
त्राणान् जस्यतीति क्विप्—त्राणजः ॥१॥

## भिस् ऐस् । १ । ४ । २ ।

आत् परस्य स्यादेः भिसः

ऐस् स्यात् ।

देवैः ।

ऐस्करणात् अतिजरसैः ॥ २ ॥

## इदमदसोऽक्येव । १ । ४ । ३ ।

इदमदसोः

अक्येव सति

आत् परस्य

भिस ऐस् स्यात् ।

इमकैः, अमुकैः ।

अक्येव इति किम् ?

एभिः अमीभिः ॥ ३ ॥

## एद् बहु-स्भोसि । १ । ४ । ४ ।

बह्वर्थे

स्यादौ

भादौ सादौ ओसि च परे

अतः
एत् स्यात्
एषु, एभिः, देवयोः ॥ ४ ॥

**टा-ङसोरिन-स्यौ । १ । ४ । ५ ।**

आत् परयोः टाङसोः
यथासङ्ख्यं इन-स्यौ स्याताम् ।
तेन, यस्य ॥ ५ ॥

**ङे-ङस्योर्यातौ १ । ४ । ६ ।**

आत् परस्य ङे-ङसेश्च
यथासङ्ख्यं य-आत्च स्याताम् ।
देवाय, देवात् ॥ ६ ॥

**सर्वादेः स्मै-स्मातौ । १ । ४ । ७ ।**

सर्वादेरदन्तस्य सम्बन्धिनोः
ङेङस्यो
यथासङ्ख्यं
स्मै-स्मातौ स्याताम् ।
सर्वस्मै, सर्वस्मात् ।

सर्व, विश्व, उभ, उभयट्,
अन्य, अन्यतर, इतर, डतर, डतम,
त्व, त्वत्, नेम,
सम-सिमौ सर्वार्थौ,
पूर्व-परा-वर-दक्षिणो-त्तरा-परा-धराणि
व्यवस्थायाम्,
स्वम-ज्ञाति-धनाख्यायाम्,
अन्तरंबहिर्योगो-पसंव्यानयोरपुरि,
त्यद्, तद्, यद्,
अदस्, इदम्, एतद्,
एक द्वि,
युष्मद्, अस्मद्,
भवतु किम्
इत्यसंज्ञायां सर्वादिः ॥ ७ ॥

## ङेः स्मिन् । १ । ४ । ८ ।

सर्वादेः अदन्तस्य
ङेः स्मिन् स्यात् ।
सर्वस्मिन् ॥ ८ ॥

## जस इः ।१।४।९।

सर्व्वादेः अदन्तस्य
जस इः स्यात् ।
सर्वे ॥ ९ ॥

## नेमा-ऽर्द्ध-प्रथम-चरम-तया-ऽया-ऽल्प-कतिपयस्य वा ।१।४।१०।

नेमादीनि नामानि,
तयायौ प्रत्ययौ ।
तेषां अदन्तानां
जस इर्वा स्यात्
नेमे, नेमाः ।
अर्द्धे, अर्द्धाः ।
प्रथमे, प्रथमाः ।
चरमे, चरमाः ।
द्वितये, द्वितयाः ।
त्रये, त्रयाः ।
अल्पे, अल्पाः ।
कतिपये, कतिपयाः ॥ १० ॥

## द्वन्द्वे वा । १ । ४ । ११ ।

द्वन्द्वसमासस्थस्य अदन्तस्य सर्वादेः
जस इर्वा स्यात् ।
पूर्वोत्तरे पूर्वोत्तराः ॥ ११ ॥

## न सर्वादिः । १ । ४ । १२ ।

द्वन्द्वे सर्वादिः
सर्वादिः न स्यात् ।
पूर्वापराय, पूर्वापरात् , पूर्वापरे ।
कतर-कतमानाम् , कतर-कतमकाः ॥१२॥

## तृतीयान्तात् पूर्वावरं योगे । १ । ४ । १३

तृतीयान्तात् परौ पूर्वाऽवरौ
योगे=सम्बन्धे सति
सर्वादी न स्याताम् ।
मासेन पूर्वाय मासपूर्वाय ।
दिनेनावराय दिनावराय ।

दिनेनावराः दिनावराः ।

तृतीयान्तादिति किम् ?

पूर्वस्मै मासेन ॥ १३ ॥

**तीयं ङित्कार्ये वा । १ । ४ । १४ ।**

तीयान्तं नाम

ङे-ङसि-ङस्-ङीनां कार्ये

सर्वादिर्वा स्यात् ।

द्वितीयस्मै, द्वितीयाय ।

द्वितीयस्यै, द्वितीयायै ।

ङित्कार्य इति किम् ?

द्वितीयकाय ॥ १४ ॥

**अवर्णस्यामः साम् । १ । ४ । १५ ।**

अवर्णान्तस्य सर्वादेः

आमः साम् स्यात् ।

सर्वेषाम्, विश्वासाम् ॥ १५ ।

खट्वायै, खट्वायाः,
खट्वायाः, खट्वायाम् ॥ १७ ॥

सर्व्वादेर्डस्पूर्व्वाः । १ । ४ । १८ ।

सर्व्वादेः आबन्तस्य
ङिताम्
यै-यास्-यास्-यामः
ते डस्पूर्वाः स्युः ।
सर्वस्यै, सर्वस्याः,
सर्वस्याः, सर्वस्याम् ॥ १८ ॥

टौस्येत् । १ । ४ । १९ ।

आबन्तस्य
टौसोः परयोः एकारः स्यात् ।
बहुराजया, बहुराजयोः ॥ १९ ॥

औता । १ । ४ । २० ।

आबन्तस्य
औता सह
ऐकारः स्यात् ।
माले स्तः, पश्य वा ॥ २० ॥

इदुतोऽस्त्रेरीदूत् । १ । ४ । २१ ।

अस्त्र्यन्तस्य इदन्तस्योदन्तस्य च
औता सह
यथासङ्ख्यम्
ईदूतौ स्याताम् ।
मुनी, साधू ।
अस्त्रेरिति किम् ?
अतिस्त्रियौ नरौ ॥ २१ ॥

जस्येदोत् । १ । ४ । २२ ।

इदुदन्तयोः
जसि परे
यथासङ्ख्यं एदोतौ स्याताम् ।
मुनयः, साधवः ॥ २२ ॥

ङित्यदिति । १ । ४ । २३ ।

अदिति ङिति स्यादौ परे
इदुदन्तयोः
यथासङ्ख्यं
एदोतौ स्याताम् ।

अतिस्त्रये साधवे, अतिस्त्रेः साधोः

आगतं, स्वम् वा ।

अदितीति किम् ? बुद्ध्याः, धेन्वाः ।

स्यादावित्येव ? शुची स्त्री ॥ २३ ॥

**टः पुंसि ना । १ । ४ । २४ ।**

इदुदन्तात् परस्याः

पुंविषयायाः टाया ना स्यात् ।

अतिस्त्रिणा, अमुना,

पुंसीति किम् ? बुद्ध्या ॥ २४ ॥

**ङिडौँ । १ । ४ । २५ ।**

इदुदन्तात् परो

ङिर्डौः स्यात्,

मुनौ, धेनौ ।

अदिदित्येव ? बुद्ध्याम् ॥ २५ ॥

**केवलसखिपतेरौः । १ । ४ । २६ ।**

केवल-सखि-पतिभ्यां इदन्ताभ्यां परो

ङिरौः स्यात् ।

सख्यौ पत्यौ ।

इत इत्येव ?

सखायमिच्छति, पतिमिच्छति=

सख्यि, पत्यि ।

केवलेति किम् ?

प्रियसखौ, नरपतौ ॥ २६ ॥

## न ना ङिदेत् । १ । ४ । २७ ।

केवल-सखि-पतेः यः टायाः ना,

ङिति परे एत् च उक्तः

स न स्यात् ।

सख्या, पत्या,

सख्ये, पत्ये,

सख्युः, पत्युः आगतं, स्वं वा ।

सख्यौ पत्यौ ।

ङिदिति किम् ? पतयः ॥ २७ ॥

स्त्रिया ङितां वा

दै-दास्-दास्-दाम् । १ । ४ । २८ ।

स्त्रीलिङ्गात् इदुदन्तात् परेषाम्

ङिताम्=ङे-ङसि-ङस्-ङीनाम्

यथासङ्ख्यं

दै-दास्-दास्-दामो वा स्युः ।

बुद्ध्यै, बुद्धये ।

बुद्ध्याः, बुद्धेः आगतम्, स्वं वा ।

बुद्ध्याम् बुद्धौ ।

धेन्वै, धेनवे ।

धेन्वाः, धेनोः ।

धेन्वाम, धेनौ ।

प्रियबुद्ध्यै, प्रियबुद्धये

पुंसे-स्त्रियै वा ॥ २८ ॥

स्त्रीदूतः । १ । ४ । २९ ।

नित्यस्त्रीलिङ्गात् ईदूदन्ताच्च परेषां
स्यादेर्ङितां यथासङ्ख्यं
दै-दास्-दास्-दामः स्युः ।
नद्यै, नद्याः, नद्याः, नद्याम् ।
कुर्व्यै, कुर्व्याः, कुर्व्याः, कुर्व्याम् ।
अतिलक्ष्म्यै पुंसे-स्त्रियै वा ।
स्त्रीति किम्?
ग्रामण्ये, खलप्वे पुंसे-स्त्रियै ॥ २९ ॥

वेयुवोऽस्त्रियाः । १ । ४ । ३० ।

इयुव्स्थानिनौ यौ स्त्रीदूतौ
तदन्तात् स्त्रीवर्जात् परेषाम्
स्यादेर्ङिताम्
यथासंख्यम्
दै-दास्-दास्-दामो वा स्युः ।

श्रियै, श्रिये । श्रियाः, श्रियः २ ।
श्रियाम्, श्रियि ।
अतिश्रियै, अतिश्रिये
पुंसे स्त्रियै वा ।
भ्रुवै, भ्रुवे । भ्रुवाः, भ्रुवः ।
भ्रुवाः भ्रुवः । भ्रुवाम् भ्रुवि ।
अतिभ्रुवै, अतिभ्रुवे पुंसे स्त्रियै वा ।
इयुव इति किम् ? आध्यै
अ–स्त्रिया इति किम् ? स्त्रियै ॥३०॥

**आमो नाम् वा ।१।४।३१।**

इयुवोः स्थानिभ्यां
स्त्री–दन्ताभ्यां
परस्य आमो
नाम् वा स्यात्,
न तु स्त्रियाः ।
श्रीणाम्, श्रियाम् ।
भ्रूणाम्, भ्रुवाम् ।
अतिश्रीणाम्, अतिश्रियाम् ।

अनिञनाम् अनिश्रनाम्

नृनाम् नृणाम् वा ।

स्पृश स्वेर-धर्मीनाम् ॥ ३१ ॥

ह्रस्वाऽऽपश्च । १ । ४ । ३२ ।

ह्रस्वान्तात्

आबन्तात्

स्त्री-दन्ताच्च परस्याः

आमो

'नाम्' स्यात् ।

देवानाम्,

मालानाम्,

स्त्रीणाम्,

वधूनाम् ॥ ३२ ॥

संख्यानां र्णाम् । १ । ४ । ३३ ।

-ष-नान्तानां

संख्यावाचिनां

आमो

'नाम्' स्यात् ।

सख्युः, सख्युः ।

पत्युः, पत्युः ।

सखायं पतिं चेच्छतः

सख्युः २, पत्युः २ ।

य इति किम् ?

अतिसखेः, अधिपतेः ॥ ३६ ॥

## ऋतो डुर् । १ । ४ । ३७ ।

ऋतः परयोः ङसि-ङसोः

डुर् स्यात् ।

पितुः, पितुः ॥ ३७ ॥

## तृ-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्त्रो-घुट्यार् । १ । ४ । ३८ ।

तृच् तृन्नन्तस्य

स्वस्रादीनां च

ऋतो

घुटि परे

आर् स्यात् ।

र्त्तारम्, कर्त्तारौ २, कर्त्तारः ।

स्वसारम्,

नप्तारम्,

नेष्टारम्,

त्वष्टारम्,

क्षत्तारम्,

होतारम्,

पोतारम्,

प्रशास्तारम् ।

घुटीति किम् ?

कर्तृ कुलम् पश्य ॥ ३८ ॥

## अर्डौ च । १ । ४ । ३९ ।

ऋतो

डौ घुटि च परे

अर् स्यात् ।

नरि । नरम् ॥ ३९ ॥

एदापः । १ । ४ । ४२ ।

आमन्त्र्यार्थवृत्तेः

आवन्तस्य सिना सहैकारः स्यात् ।

हे माले !, हे बहुराजे ! ॥४२॥

नित्यदिद्-द्विस्वरा-म्बार्थस्य

ह्रस्वः । १ । ४ । ४३ ।

नित्यं दिद्=

दै-दास्-दास्-दामादेशाः

येभ्यः

स्तेषां

द्विस्वराम्बार्थानां च

आवन्तानां

आमन्त्र्यवृत्तीनां

सिना सह ह्रस्वः स्यात् ।

हे स्त्रि !, हे लक्ष्मि !,

हे श्वश्रु !, हे वधु !,

हे अम्ब !, हे अक्क !,

नित्यदिदिति किम् ? हे हूहूः !

द्विस्वरेति किम्? हे अम्बाडे! ।
आप इत्येव? हे मातः! ॥ ४३ ॥

## अदेतः स्यमोर्लुक् । १ । ४ । ४४ ।

अदन्तादेदन्ताच्च
आमन्त्र्यवृत्तेः परस्य
सेरमश्च लुक् स्यात् ।
हे देव!, हे उपकुम्भ!,
हे अतिहे! ॥ ४४ ॥

## दीर्घङ्याब्-व्यञ्जनात् सेः । १ । ४ । ४५ ।

दीर्घङ्याबन्ताभ्यां
व्यञ्जनाच्च परस्य
सेर्लुक् स्यात् ।
नदी, माला, राजा ।
दीर्घेति किम्?
निष्कौशाम्बिः अतिखट्वः ॥४५॥

## समानादमोऽतः । १ । ४ । ४६ ।

समानात् परस्य
अमोऽस्य लुक् स्यात् ।

देवम्, मालाम्,
मुनिम्, नदीम्,
साधुम्, वधूम् ॥ ४६ ॥

## दीर्घो नाम्य-तिसृ-चतसृ-ष्र्ः ।१।४।४७।

तिसृ-चतसृ ष-रान्तवर्जस्य
समानस्य
नामि परे
दीर्घः स्यात् ।

वनानाम्,
मुनीनाम्,
साधूनाम्,
पितृणाम् ।
अति सृ-चतसृ-ष्र् इति किम् ?
तिसृणाम्,
चतसृणाम्,
षण्णाम्,
चतुर्णाम् ॥ ४७ ॥

नुर्वा । १ । ४ । ४८ ।

नुः समानस्य
नामि परे
दीर्घो वा स्यात् ।
नॄणाम्, नृणाम् ॥ ४८ ॥

शसोऽता सश्च नः पुंसि । १ । ४ । ४९ ।

शसोऽता सह
पूर्वसमानस्य
दीर्घः स्यात्,
तत्सन्नियोगे च पुंसि
शसः सो नः ।
देवान्,
मुनीन्,
वातप्रमीन्,
साधून्,
हूहून्,
पितॄन् ।
पुंसीति किम्? शालाः ॥ ४९ ॥

## संख्या-साय-वेरह्नस्याहन् ङौ वा । १ । ४ । ५० ।

संख्यावाचिभ्यः
साय-विभ्यां च परस्य ।
अह्नस्य
ङौ परे
अहन् वा स्यात् ।
द्व्यहनि, द्व्यह्नि, द्व्यह्ने ।
सायाहनि, सायाह्नि, सायाह्ने ।
व्यहनि, व्यह्नि, व्यह्ने ॥ ५० ॥

## निय आम् । १ । ४ । ५१ ।

नियः परस्य
ङेराम् स्यात् ।
नियाम् । ग्रामण्याम् ॥ ५१ ॥

## वाऽष्टन आः स्यादौ । १ । ४ । ५२ ।

अष्टनः
स्यादौ परे
आः वा स्यात् ।

अष्टाभिः, अष्टभिः ।

प्रियाष्टाः, प्रियाष्टा ॥ ५२ ॥

## अष्ट और्जस्-शसोः । १ । ४ । ५३ ।

अष्टनः कृतात्वस्य

जस्-शसोरौः स्यात् ।

अष्टौ, अष्टौ ॥ ५३ ॥

## डति-ष्णः संख्याया लुप् । १ । ४ । ५४ ।

डति-ष-नान्तानां

संख्यानां

जस्शसो-

र्लुप् स्यात् ।

कति, कति ।

षट्, षट् ।

पञ्च, पञ्च ॥ ५४ ॥

## नपुंसकस्य शिः । १ । ४ । ५५ ।

नपुंसकस्य

जस्-शसोः

शिः स्यात् ।

कुण्डानि, पयांसि ॥ ५५ ॥

औरीः । १ । ४ । ५६ ।

नपुंसकस्य
औः ईः स्यात् ।
कुण्डे । पयसी ॥ ५६ ॥

अतः स्यमोऽम् । १ । ४ । ५७ ।

अदन्तस्य नपुंसकस्य
स्यमोः
अम् स्यात् ।
कुण्डम्, हे कुण्ड ! ॥ ५७ ॥

पञ्चतोऽन्यादेरनेकतरस्य दः । १ । ४ । ५८ ।

पञ्चपरिमाणस्य
नपुंसकस्य
अन्यादेः
स्यमोर्दः स्यात्,
एकतरवर्जम् ।
अन्यत्, अन्यतरत्, इतरत्,
कतरत्, कतमत् ।
अनेकतरस्येति किम् ? एकतरम् ॥५८॥

## अनतो लुप् । १ । ४ । ५९ ।

अनकारान्तस्य नपुंसकस्य स्यमोः लुप् स्यात् । कर्तृ, पयः ॥ ५९ ॥

## जरसो वा । १ । ४ । ६० ।

जरसन्तस्य नपुंसकस्य स्यमोः लुब् वा स्यात् । अतिजरः, अतिजरसम्, अतिजरम् ॥६०॥

## नामिनो लुग् वा । १ । ४ । ६१ ।

नाम्यन्तस्य नपुंसकस्य स्यमोः लुग् वा स्यात् । हे वारे !, हे वारि ! । प्रियतिसृ, प्रियत्रि कुलम् ॥ ६१ ॥

## ऽन्यतः पुमांष्टादौ स्वरे ।१।४।६२।

अन्यतो=विशेष्यवशात्
नपुंसको नाम्यन्तः
टादौ स्वरे परे
पुंवत् वा स्यात् ।

ग्रामण्या–ग्रामणिना कुलेन,
कर्त्रोः–कर्तृणोः कुलयोः ।
अन्यत इति किम् ? पीलुने फलाय ।
टादाविति किम् ? शुचिनी कुले ।
नपुंसक इत्येव ?
कल्याण्यै स्त्रियै ॥ ६२ ॥

## दध्यस्थिसक्थ्यक्ष्णोऽन्तस्याऽन् ।१।४।६३

एषां नपुंसकानां
नाम्यन्तानाम
अन्तस्य
टादौ स्वरे परे
अन् स्यात् ।

दध्ना, अतिदध्ना ।
अस्थ्ना, अत्यस्थ्ना ।
सक्थ्ना, अतिसक्थ्ना ।
अक्ष्णा, अत्यक्ष्णा ॥ ६३ ॥

**अनामस्वरे नोऽन्तः । १ । ४ । ६४ ।**

नाम्यन्तस्य नपुंसकस्य
आम्वर्ज्जे
स्यादौ स्वरे परे
नोऽन्तः स्यात् ।
वारिणी, वारिणः ।
कर्तृनी, कर्तृणः ।
प्रियतिसृणः ।
अनाम् इति किम् ? वारीणाम् ।
स्वर इति किम् ! हे वारे !
स्यादावित्येव ? तौम्बुरवं चूर्णम् ॥ ६४ ॥

**स्वराच्छौ । १ । ४ । ६५ ।**

शौ परे स्वरान्तात्
नपुंसकात् परो
नोऽन्तः स्यात् ।

कुण्डानि ।

स्वरात् इति किम् ? चत्वारि ॥६५॥

## धुटां प्राक् । १ । ४ । ६६ ।

स्वरात् परा या धुट्जातिः
तदन्तस्य नपुंसकस्य
शौ परे
धुड्भ्य एव प्राग्
नोऽन्तः स्यात् ।
पयांसि, अतिजरांसि, काष्ठतक्षि ।
स्वरात् इत्येव ? गोमन्ति ॥६६॥

## र्लो वा । १ । ४ । ६७ ।

रलाभ्याम् परा या धुट्जातिः
तदन्तस्य नपुंसकस्य
शौ परे
धुड्भ्य एव प्राक्
नोऽन्तो वा स्यात् ।

वहूर्ञ्जि, वहूर्जि ।
सुवल्ङ्गि, सुवल्गि ।
लँ इति किम् ? काष्टतक्षि ।
धुटाम् इत्येव ? सुफुल्लि ॥६७॥

घुटि । १ । ४ । ६८ ।

निमित्तविशेषोपादानं विना
आपादपरिसमाप्तेः
यत् कार्यं वक्ष्यते,
तद्
घुटि वेदितव्यम् ॥ ६८ ॥

अचः । १ । ४ । ६९ ।

अञ्चतेर्धातोः
धुडन्तस्य
धुटः प्राक्
नोऽन्तो घुटि स्यात् ।
प्राङ्, अतिप्राङ्, प्राञ्चौ,
प्राञ्चि कुलानि ॥ ६९ ॥

## ऋदुदितः । १ । ४ । ७० ।

ऋदुदितो घुडन्तस्य घुटि परे धुटः प्राक् स्वरात् परो नोऽन्तः स्यात् । कुर्वन्, विद्वान्, गोमान् । घुटीत्येव ? गोमता ॥ ७० ॥

## युञ्जोऽसमासे । १ । ४ । ७१ ।

"युजृंपी योगे" इत्यस्याऽसमासे घुडन्तस्य धुटः प्राक् नोऽन्तः स्यात् । युङ्, युञ्जौ, युञ्जि कुलानि, बहुयुङ् । असमास इति किम् ? अश्वयुक् । युज इति किम् ? "युजिच् समाधौ" युजमापन्ना मुनयः ॥ ७१ ॥

## अनडुहः सौ । १ । ४ । ७२ ।

अनडुहो घुडन्तस्य धुटः प्राक् सौ परे नोऽन्तः स्यात् । अनड्वान्, प्रियाऽनड्वान् ॥७२॥

## पुंसोः पुमन्स् । १ । ४ । ७३ ।

पुंसः पुमन्स् घुटि स्यात् ।

पुमान्, पुमांसौ, पुमांसः ।

प्रियपुमान्, प्रियपुमांसि ॥७३॥

## ओत औः । १ । ४ । ७४ ।

ओतो

घुटि परे

औः स्यात् ।

गौः, गावौः ।

द्यौः, द्यावौ। प्रियद्यावौ ।

ओत इति किम् ? चित्रगुः ॥७४॥

## आ अम्-शसोऽता । १ । ४ । ७५ ।

ओतः

अम्-शसोः

अता सह

आः स्यात् ।

गाम्, सुगाम्, गाः ।

द्याम्, अतिद्याम्, द्याः ।

सुद्याः ॥ ७५ ॥

## थिन-मथिन्-ऋभुक्षः सौ । १ । ४ । ७६ ।

एषां नान्तानां

अन्तस्य

सौ परे

आः स्यात् ।

पन्थाः, हे पन्थाः ।

मन्थाः, हे मन्थाः ।

ऋभुक्षाः, हे ऋभुक्षाः ।

नान्त-निर्देशात् इह न स्यात्-

पंथानमिच्छन्=पथीः ॥ ७६ ॥

## एः । १ । ४ । ७७ ।

पथ्यादीनां नान्तानाम्

इतः

घुटि परे

आः स्यात् ।

पन्थाः, पन्थानौ, पन्थानः,
पन्थानम् , सुपन्थानि कुलानि ।
मन्थाः, ऋभुक्षाः ।
नान्तनिर्देशाद् एरभावाच्च
इह न स्यात्-
पथ्योः पथ्यः ॥ ७७ ॥

## थो न्थ् । १ । ४ । ७८ ।

पथिन्-मथिनोर्नान्तयोः
थस्य
घुटि परे
'न्थ्' स्यात् ।
तथैवोदाहृतम् ॥ ७८ ॥

## इन्-ङी-स्वरे लुक् । १ । ४ । ७९ ।

पथ्यादीनां नान्तानां
ङ्याम्
अघुट्स्वरादौ च
स्यादौ परे
इन्
लुक् स्यात् ।

सुपथी स्त्री, कुले वा ।
पथः, सुमथी स्त्री, कुले वा ।
मथः, ऋभुक्षः अनृभुक्षी सेना कुले वा ।
॥ ७९ ॥

## वोशनसो नश्चामन्त्र्ये सौ ।१।४।८०।

आमन्त्र्यवृत्तेः
उशनसो
न-लुकौ
सौ परे
वा स्याताम् ।
हे उशनन् !, हे उशन !, हे उशनः ! ।
आमन्त्र्य इति किम् ? उशना ॥८०॥

## उतोऽनडुच्चतुरो वः ।१।४।८१।

आमन्त्र्यवृत्त्योः
अनडु-च्चतुरोः
उतः
सौ परे वः स्यात् ।

हे अनड्वन् ! ।

हे प्रियचत्वः ! ।

हे अतिचत्वः ! ॥

वा शेषे । १ ।

आमन्त्र्यविहितात् सेः

अन्यो घुट्, शेषः ।

तस्मिन् परे

अनडु-च्चतुरो

उतः

वा स्यात् ।

अनड्वान्, अनडुवाहौ

प्रियचत्वाः, प्रियचत्वा:

शेष इति किम् ? हे अनड

हे प्रियचत्वः

सख्युरितोऽशावैत् । २

सख्युरिदन्तस्य

शिवर्जे शेषे घुटि परे

ऐत् स्या

सखायौ, सखायः, सखायम् ।
इत इति किम् ? सख्यौ स्त्रियौ ।
अशाविति किम् ? अतिसखीनि ।
शेष इत्येव ? हे सखे ! ॥८३॥

**ऋदुशनस्-पुरुदंशो-ऽनेहसश्च सेर्डाः ।१।४।८४।**

ऋदन्तात्
उशनसादेः
सख्युरितश्च
परस्य शेषस्य
सेः
डाः स्यात् ।
पिता, अतिपिता, कर्त्ता,
उशना, पुरुदंशा, अनेहा सखा ॥८४॥

**नि दीर्घः ।१।४।८५।**

शेषे घुटि परे यो नः
तत्स्मिन् परे
स्वरस्य
दीर्घः स्यात् ।

राजा, राजानौ, राजानः,
राजानम् राजानौ ।
वनानि, कर्तॄणि ।
शेष इत्येव ? हे राजन् ! ॥ ८५ ॥

**न्-स्महतोः । १ । ४ । ८६ ।**

न्सन्तस्य महतश्च
स्वरस्य
शेषे घुटि परे
दीर्घः स्यात् ।
श्रेयान्, श्रेयांसौ ।
महान्, महान्तौ ॥ ८६ ॥

**इन्-हन-पूषा-र्यम्णः शि-स्योः । १ । ४ । ८७ ।**

इन्नन्तस्य
हनादेश्च
स्वरस्य
शि-स्योरेव परयो
र्दीर्घः स्यात् ।

दण्डीनि, स्रग्वीणि,
दण्डी, स्रग्वी,
भ्रूणहानि, भ्रूणहा,
बहुपूषाणि, पूषा,
स्वर्यमाणि, अर्यमा ।
शि-स्योरेवेति किम् ?
दण्डिनौ, वृत्रहणौ,
पूषणौ, अर्यमणौ ॥ ८७ ॥

## अपः । १ । ४ । ८८ ।

अपः स्वरस्य
शेषे घुटि परे
दीर्घः स्यात् ।
आपः, स्वापौ ॥ ८८ ॥

## नि वा । १ । ४ । ८९ ।

अपः स्वरस्य
नागमे सति
घुटि परे
दीर्घो वा स्यात् ।

स्त्राम्पि, स्त्रम्पि ।
ब्रह्माम्पि, ब्रह्मम्पि ॥ ८९ ॥

## अभ्वादेरत्वसः सौ । १ । ४ । ९० ।

अत्वन्तस्य
असन्तस्य च
भ्वादिवर्जस्य
शेषे सौ परे
दीर्घः स्यात् ।
भवान्, यवमान्, अप्सराः ।
गोमन्तम् स्थूलशिरसम् वा
इच्छन्=गोमान्,
स्थूलशिराः ।
अभ्वादेरिति किम्? पिण्डग्रः ॥९०॥

## क्रुशस्तुनस्तृच् पुंसि । १ । ४ । ९१ ।

क्रुशो यस्तुन्,
तस्य
शेषे घुटि परे
तृच् स्यात्, पुंसि ।

क्रोष्टा, क्रोष्टारौ ।
पुंसीति किम् ?
कृशक्रोष्टूनि वनानि ॥ ९१ ॥

## टाऽऽदौ स्वरे वा । १ । ४ । ९२ ।

टाऽऽदौ स्वराऽऽदौ परे
क्रुशः
तुनः
तृज् वा स्यात्,
पुंसि ।
क्रोष्ट्रा, क्रोष्टुना;
क्रोष्ट्रोः, क्रोष्ट्वोः ॥ ९२ ॥

## स्त्रियाम् । १ । ४ । ९३ ।

क्रुशः परस्य तुनः
स्त्रीवृत्तेः
तृच् स्यात्,

निर्निमित्त एव ।

क्रोष्ट्री, क्रोष्ट्र्यौ, क्रोष्ट्रीभ्याम् ।

पञ्चक्रोष्टृभी रथैः ॥ ९३ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां
सिद्धहेमचन्द्राभिधानस्वोपज्ञ-
शब्दानुशासनलघुवृत्तौ
प्रथमस्याध्यायस्य
चतुर्थः पादः समाप्तः ॥ १ । ४ ॥

विना व्याकरणं नहि
भाषासौष्ठवम्, भाषासमिति-
परिपालनञ्च सम्यग् भवति ।

द्वितीयाध्यायस्य-

# प्रथमः पादः

## त्रि-चतुरस्तिसृ-चतसृ स्यादौ ।२।१।१।

स्त्रियामिति वर्त्तते ।

स्यादौ परे

स्त्रीवृत्त्योस्त्रि-चतुरो

यथासंख्यं

तिसृ-चतसृ इत्येतौ स्याताम् ।

तिस्रः, चतस्रः,

तिसृषु, चतसृषु,

प्रियतिसा, प्रियचतसा ना ।

प्रियतिसृ कुलम्, प्रियत्रि कुलम् ।

स्यादौ इति किम् ?

प्रियत्रिकः, प्रियचतुष्कः ॥ १ ॥

## ऋतो रः स्वरेऽनि ।२।१।२।

तिसृ-चतसृस्थस्य ऋतः
स्वरादौ स्यादौ परे
रः स्यात्
अननि=नविषयात् अन्यत्र ।
तिस्रः, चतस्रः,
प्रियतिस्रौ, प्रियचतस्रौ,
स्वर इति किम् ? तिसृभिः, चतसृभिः ।
अ-नि इति किम् ?
तिसृणाम्, चतसृणाम् ॥ २ ॥

## जराया जरस् वा ।२।१।३।

स्वरादौ स्यादौ परे
जराया जरस् वा स्यात् ।
जरसौ जरसः ।
जरे, जराः ।
अतिजरसौ-अतिजरौ ।
अतिजरसम्-अतिजरम कुलम् ॥ ३ ॥

### अपोऽद् भे । २ । १ । ४ ।

भादौ स्यादौ परे
अपो अत् स्यात् ।
अद्भिः, स्वद्भ्याम् ।
भे इति किम्? अप्सु ॥ ४ ॥

### आ रायो व्यञ्जने । २ । १ । ५ ।

व्यञ्जनादौ स्यादौ परे
रै-शब्दस्य आः स्यात् ।
राः, रासु
अति-राभ्याम् कुलाभ्याम् ।
व्यञ्जन इति किम्? रायः ॥ ५ ॥

### युष्मद्-स्मदोः । २ । १ । ६ ।

व्यञ्जनादौ स्यादौ परे
युष्मद्-स्मदोराः स्यात् ।
त्वाम्, माम्,
अतित्वाम्, अतिमाम्,
नासु, अस्मासु ॥ ६ ॥

टा-ङ्यो-सि यः । २ । १ । ६ ।

टा-ङ्यो-स्सु परेषु
युष्मद्-स्मदोर्यः स्यात् ।
त्वया, मया,
अतियुवया, अत्यावया,
त्वयि, मयि,
युवयोः, आवयोः ।
टा-ङ्यो-सीति किम्? त्वत्, मत् ॥७॥

शेषे लुक् । २ । १ ।

यस्मिन् आ-यौ कृतौ, ततोऽन्यः शेषः ।
तस्मिन् स्यादौ परे
युष्मद्-स्मदोर्लुक् स्यात् ।
युष्मभ्यम्, अस्मभ्यम्,
अतित्वत् अतिमत्,
शेष इति किम्? त्वयि । मयि ॥८॥

मोर्वा । २ । १ । ९ ।

शेषे स्यादौ परे
युष्मद्-स्मदोर्मो लुग् वा स्यात् ।

युवाम्—युष्मान् वा,
आवाम् अस्मान् वा
आचक्षाणेभ्यो
णिचि क्विपि च लुकि च।
युष्मभ्यम्-युपभ्यम् ।
अस्मभ्यम्—असभ्यम् ॥ ९ ॥

**मन्तस्य युवा-वौ द्वयोः । २ । १ । १० ।**

द्व्यर्थवृत्त्योः
युष्मद्-स्मदोः
मान्तावयवस्य
स्यादौ परे
यथासंख्यं युव-आव
इत्येतौ स्याताम् ।
युवाम्, आवाम्,
अतियुवाम, अत्यावाम,
अतियुवासु, अत्यावासु,
मन्तस्येति किम्? युवयोः आवयोः
इत्यत्र दस्य यत्वं यथा स्यात् ।
स्यादावित्येव ?
युवयोः पुत्रो युष्मत्पुत्रः ॥ १० ॥

## त्व-मौ प्रत्ययो-त्तरपदे चैकस्मिन् ।२।१।११

स्यादौ प्रत्ययो-त्तरपदयोश्च परयोः
एकार्थवृत्त्योः
युष्मद्-स्मदोः
मान्तावयवस्य
यथासंख्यं
त्व-म इत्येतौ स्याताम् ।
त्वाम्, माम्,
अतित्वाम्, अतिमाम्,
अतित्वासु, अतिमासु,
त्वदीयः, मदीयः,
त्वत्पुत्रः, मत्पुत्रः ।
प्रत्ययो-त्तरपदे चेति किम् ?
अधियुष्मद्, अध्यस्मद् ।
एकस्मिन्निति किम् ?
युष्माकम्, अस्माकम् ॥ ११ ॥

## त्वम-हं सिना प्राक् चाकः । २ । १ । १२ ।

सिना सह
युष्मद्-स्मदोः

यथासंख्यं
त्वम्-अहमौ स्याताम् ।
तौ चाक्-प्रसङ्गेऽकः प्रागेव ।
त्वम्, अहम्,
अतित्वम्, अत्यहम् ।
प्राक् चाक इति किम् ?
त्वकम्, अहकम् ॥ १२ ॥

## यूयं वयं जसा । २ । १ । १३ ।

जसा सह युष्मद्-स्मदोः
यथासंख्यं
यूयम्-वयमौ स्याताम् ।
यूयम्, वयम्,
प्रिययूयम्, प्रियवयम् ।
प्राक् चाक इत्येव ?
यूयकम्, वयकम् ॥ १३ ॥

## तुभ्यं-मह्यं ङया । २ । १ । १४ ।

ङया सह युष्मद्-स्मदोः
यथासंख्यं
तुभ्यम्-मह्यमौ स्याताम् ।

तुभ्यम्, मह्यम्,
प्रियतुभ्यम्, प्रियमह्यम् ।
प्राक् चाक इत्येव ?
तुभ्यकम्, मह्यकम् ॥ १४ ॥

**तव मम ङसा । २ । १ । १५ ।**

ङसा सह युष्मद्-स्मदोः
यथासंख्यं
तव-ममौ स्याताम् ।
तव, मम,
प्रियतव, प्रियमम,
प्राक् चाक इत्येव ?
तवक, ममक ॥ १५ ॥

**अमौ मः । २ । १ । १६ ।**

युष्मद्-स्मद्भ्याम् परयोः
अम्-औ इत्येतयोः
म इति स्यात् ।
त्वाम्, माम्,
अतित्वाम्, अतिमाम्,

युवाम्, आवाम्,
अतियुवाम्, अत्यावाम् ॥ १६ ॥

## शसो नः । २ । १ । १७ ।

युष्मद्-स्मद्भ्यां परस्य
शसो न इति स्यात् ।
युष्मान्, अस्मान्,
प्रियत्वान्, प्रियमान् ॥ १७ ॥

## अभ्यम् भ्यसः । २ । १ । १८ ।

युष्मद्-स्मद्भ्यां परस्य
चतुर्थीभ्यसः
अभ्यं स्यात् ।
युष्मभ्यम्, अस्मभ्यम्,
अतियुवभ्यम्, अत्यावभ्यम् ॥ १८ ॥

## ङसेश्चाद् । २ । १ । १९ ।

युष्मद्-स्मद्भ्यां परस्य
ङसेः पञ्चमीभ्यसश्च
अद् इति स्यात् ।

त्वद्, मद्,

अतियुवद्, अत्यावद्,

युष्मद्, अस्मद्,

अतित्वद्, अतिमद् ॥१९॥

**आम आकम् । २ । १ । २० ।**

युष्मद्-स्मद्भ्यां परस्य

आम आकं स्यात् ।

युष्माकम्, अस्माकम्,

अतियुवाकम्, अत्यावाकम्,

युष्मान् अस्मान् वाऽऽचक्षाणानां

युष्माकम्, अस्माकम् ॥ २० ॥

**पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे । २ । १ । २१ ।**

बहुत्वविषयया सम विभक्त्या सह

पदात् परयोः

युष्मदस्मदोः

यथासंख्यं

वस्-नसौ वा स्याताम् ।

तत् चेत् पदं
युष्मद्-स्मदौ
एकस्मिन् वाक्ये स्तः ।
अन्वादेशे नित्यं विधानादिह विकल्पः ।
एवमुत्तरसूत्रत्रयेऽपि ।
धर्म्मो वो रक्षतु,
धर्मो नो रक्षतु,
धर्मो युष्मान् रक्षतु,
धर्म्मोऽस्मान् रक्षतु ।
एवं चतुर्थी-षष्ठीभ्यामपि ।
पदादिति किम् ? युष्मान् पातु ।
युग् विभक्त्येति किम् ? तीर्थे यूयं यात ।
एक-वाक्य इति किम् ? अतियुष्मान् पश्य
ओदनं पचत
युष्माकं भविष्यति ॥ २१ ॥

## द्वित्वे वाम्-नौ । २ । १ । २२

पदात् परयोः
युष्मद्-स्मदोः

द्वित्वविषयया युग् विभक्त्या सह
यथासंख्यं वाम्-नौ इत्येतौ वा स्याः
एकवाक्ये ।

धर्म्मो वां पातु,
धर्म्मो युवां पातु,
धर्म्मो नौ पातु,
धर्म्म आवां पातु,
एवं चतुर्थी-षष्ठीभ्यामपि ॥ २२ ॥

ङे-ङसा ते मे । २ । १ । २३ ।

ङे-ङस्भ्यां सह
पदात् परयोः
युष्मद्-स्मदोः
यथासंख्यं
ते-मे इत्येतौ
वा स्याताम्,
एकवाक्ये ।

धर्मस्ते दीयते, धर्म्मस्तुभ्यं दीयते,
धर्म्मो मे दीयते, धर्म्मो मह्यं दीयते,

धर्मस्ते स्वम्, धर्मस्तव स्वम्,
धर्मो मे स्वम्, धर्मो मम स्वम् ॥२३॥

**अमा त्वा-मा । २ । १ । २४ ।**

अमा सह
पदात् परयोः
युष्मद्-स्मदोः
यथासंख्यं
त्वा-मा इत्येतौ
वा स्याताम्,
एकवाक्ये ।

धर्मस्त्वा पातु, धर्मस्त्वां पातु,
धर्मो मा पातु, धर्मो मां पातु ॥२४॥

**असदिवामन्त्र्यं पूर्वम् । २ । १ । २५ ।**

आमन्त्र्यार्थं पदं
युष्मद्-स्मद्भ्यां पूर्वं
असदिव स्यात् ।

जना ! युष्मान् पातु धर्मः,
साधू ! युवां पातु धर्मः,

साधो ! त्वां पातु तपः ।
पूर्वमिति किम्, मयैतत्सर्वमाख्यातं
युष्माकं मुनिपुङ्गवाः ॥ २५ ॥

## जस्विशेष्यं वाऽऽमन्त्र्ये । २ । १ । २६ ।

युष्मद्–स्मद्भ्यां पूर्वं
जसन्तं
आमन्त्र्यार्थं
विशेष्यवाचि
आमन्त्र्ये पदे=
अर्थात् तद्विशेषणे परे
असदिव
वा स्यात् ।

जिनाः ! शरण्या युष्मान् शरणं प्रपद्ये,
जिनाः ! शरण्या वः शरणं प्रपद्ये ।
जिनाः ! शरण्या अस्मान् रक्षत,
जिनाः ! शरण्या नो रक्षत ।
जस इति किम् ?
साधो ! सुविहित ! वोऽथो शरणं प्रपद्ये,

## तृप्तार्थ--पूरणा-ऽव्यया-ऽतृश्-शत्रा-नशा ।३।१।८५।

तृप्तार्थैः

पूरणप्रत्ययान्तैः

अव्ययैः

अतृशन्तैः

शत्रन्तैः

आनशन्तैश्च

षष्ठ्यन्तं न समस्यते ।

फलानां तृप्तः,

तीर्थकृतां षोडशः,

राज्ञः साक्षात्,

रामस्य द्विषन्,

चैत्रस्य पचन्,

मैत्रस्य पचमानः ॥ ८५ ॥

## ज्ञाने-च्छा-ऽर्चाऽर्था-ऽऽधारक्तेन ।३।१।८६।

ज्ञाने-च्छाऽर्चार्थेभ्यो
यो वर्त्तमाने क्तो
यश्च
" अद्यर्थाच्चारे "
( ५-१-१२ )
इति आधारे क्तः
तदन्तेन
षष्ठ्यन्तं
न समस्यते ।
राज्ञां ज्ञातः, राज्ञामिष्टः,
राज्ञां पूजितः,
इदमेषां यातम् ॥ ८६ ॥

**अ-स्वस्थगुणैः । ३ । १ । ८७**

ये गुणाः स्वात्मन्येव तिष्ठन्ति,
न द्रव्ये=ते
स्वस्थाः तत्प्रतिषेधेन
अ-स्वस्थगुणवाचिभिः
षष्ठ्यन्तं
न समस्यते ।

पटस्य शुक्लः, गुडस्य मधुरः ।

अ-स्वस्थगुणैरिति किम् ?

घटवर्णः, चन्दनगन्धः ॥ ८७ ॥

## सप्तमी शौण्डाद्यैः । ३ । १ । ८८ ।

एभिः सह

ऐकार्थ्ये

सप्तम्यन्तं

समासस्तत्पुरुषः स्यात् ।

दानशौण्डः, अक्षधूर्त्तः ॥ ८८ ॥

## सिंहाद्यैः पूजायाम् । ३ । १ । ८९ ।

एभिः

सप्तम्यन्तं

समासस्तत्पुरुषः स्यात्,

पूजायां गम्यमानायां ।

समरसिंहः, भूमिवासवः ॥ ८९ ॥

## काकाद्यैः क्षेपे । ३ । १ । ९० ।

एभिः
सप्तम्यन्तं
निन्दायां गम्यमानायां
समासस्तत्पुरुषः स्यात् ।
तीर्थकाकः, तीर्थश्वा ।
क्षेप इति किम् ?
तीर्थे काकोऽस्ति ॥ ९० ॥

**पात्रेसमिते-त्यादयः । ३ । १ । ९१ ।**

एते
सप्तमीतत्पुरुषाः
क्षेपे
निपात्यन्ते ।
पात्रेसमिताः, गेहेशूरः ॥ ९१ ॥

**क्तेन । ३ । १ । ९२ ।**

सप्तम्यन्तं
क्तान्तेन
क्षेपे

समासस्तत्पुरुषश्च स्यात् ।
भस्मनिहुतं,
अवतप्तेनकुलस्थितम् ॥ ९२ ॥

तत्राहोरात्रांशम् । ३ । १ । ९३ ।

तत्र
इति सप्तम्यन्तं
अहरवयवा रात्र्यवयवाश्च
सप्तम्यन्ताः
क्तान्तेन
समासस्तत्पुरुषः स्यात् ।
तत्रकृतम्,
पूर्वाह्णकृतम्,
पूर्वरात्रकृतम् ।
तत्राऽहोरात्रांशमिति किम् ?
घटे कृतम् ।
अहोरात्रग्रहणं किम् ?
शुक्लपक्षे कृतम् ।

अंशमिति किम् ?

अह्नि भुक्तं, रात्रौ नृत्तम् ॥ ९३ ॥

**नाम्नि । ३ । १ । ९४ ।**

सप्तम्यन्तं

नाम्ना

संज्ञाविषये

समासस्तत्पुरुषश्च स्यात् ।

अरण्येतिलकाः, अरण्येमाषकाः ॥ ९४ ॥

**कृत्येनावश्यके । ३ । १ । ९५ ।**

सप्तम्यन्तं नाम

" य एच्चातः "

( ५-१-२८ )

इति यान्तेन

अवश्यम्भावे गम्ये

समासस्तत्पुरुषश्च स्यात् ।

मासदेयम् ।

कृद् इति किम् ?

मासे पित्र्यम् ॥ ९५ ॥

## विशेषणं विशेष्येणैकार्थं कर्म्मधारयश्च । ३ । १ । ९६

भिन्नप्रवृत्ति-निमित्तयोः शब्दयोः
एकस्मिन्नर्थे वृत्तिः=
=ऐकार्थ्यं,
तद्विशेषणवाचि
विशेष्यवाचिना
ऐकार्थ्ये
समासस्तत्पुरुषः
कर्म्मधारयश्च स्यात् ।
नीलोत्पलम्,
खञ्जकुण्टः,
कुण्टखञ्जः ।
एकार्थमिति किम् ?
वृद्धस्योक्षा—वृद्धोक्षा ॥ ९६ ॥

## पूर्वकालैक-सर्व-जरत्-पुराण-नव-केवलम् । ३ । १ । ९७ ।

पूर्वकालो यस्य तद्वाचि-
एकादीनि च
एकार्थानि,
परेण नाम्ना
समासस्तत्पुरुषः
कर्मधारयश्च स्यात् ।
स्नातानुलिप्तः-एकशाटी,
सर्वान्नम्-जरद्गवः,
पुराणकविः-नवोक्तिः,
केवलज्ञानम् ।
एकार्थमित्येव ?
स्नात्वाऽनुलिप्तः ॥ ९७ ॥

**दिगधिकं संज्ञा-तद्धितो-त्तरपदे ।३।१।९८।**

दिग्वाचि
अधिकं च
एकार्थं

नाम्ना
समासस्तत्पुरुषः
कर्मधारयश्च स्यात्,
संज्ञायां तद्धिते च
विषयभूते उत्तरपदे च परतः ।
दक्षिणकोशला,
पूर्वेषुकामशमी,
दक्षिणशालः ।
अधिकषाष्टिकः,
उत्तरगवधनः
अधिकगवप्रियः ॥ ९८ ॥

**संख्या समाहारे च द्विगुश्चानाम्न्ययम**

। ३ । १ । ९९ ।

संख्यावाचि
परेण नाम्ना
समासस्तत्पुरुषः
कर्म्मधारयश्च स्यात् ।

ज्ञा-तद्धितयोर्विषये,

उत्तरपदे च परे,

समाहारे चार्थे

अयमेव चाऽसंज्ञायां द्विगुश्च ।

श्चाम्राः, सप्तर्षयः ।

द्वैमातुरः,

अध्यर्द्धकंसः ।

श्चगवधनः,

पञ्चनावप्रियः ।

पञ्चराजी ।

समाहारे चेति किम ?

अष्टौ प्रवचनमातरः ।

अ-नाम्नीति किम् ?

पाञ्चर्षम् ॥ ९९ ॥

## निन्द्यं कुत्सनैरपापाद्यैः

। ३ । १ । १०० ।

निन्द्यवाचि

निन्दाहेतुभिः

पापादिवर्जैः सह

समासस्तत्पुरुषः, कर्म्मधारयश्च स्यात्

वैयाकरणखसूची, मीमांसकदुर्दुरूढः ।

निन्द्यमिति किम् ?

वैयाकरणश्चौरः ।

अपापाद्यैरिति किम् ?

पापवैयाकरणः, हतविधिः ॥१०१॥

**उपमानं समान्यैः । ३ । १ । १०१ ।**

उपमानवाचि एकार्थे

उपमानोपमेय-साधारणधर्म्मवाचिभिरेव

समासस्तत्पुरुषः

कर्म्मधारयश्च स्यात्

शस्त्रीश्यामा, मृगचपला ।

उपमानमिति किम् ?

देवदत्ता श्यामा ।

न्यैरिति किम् ?

अग्निर्माणवकः ॥ १०१ ॥

**पमेयं व्याघ्राद्यैः**

**म्यानुक्तौ । ३ । १ । १०२ ।**

उपमेयवाचि एकार्थैः
उपमानवाचिभिः
व्याघ्राद्यैः
साधारणधर्मानुक्तौ
समासस्तत्पुरुषः कर्म्मधारयश्च स्यात् ।
पुरुषव्याघ्रः, श्वसिंही ।
साम्यानुक्ताविति किम् ?
पुरुषव्याघ्रः, शूरः
इति मा भूत् ॥ १०२॥

**पूर्वाऽपर--प्रथम--चरम--जघन्य-समान-मध्य-मध्यम-वीरम्**
**। ३ । १ । १०३ ।**

एतानि
एकार्थानि
नाम्ना परेण
समासस्तत्पुरुषः कर्म्मधारयश्च स्युः ।
पूर्वपुरुषः, अपरपुरुषः,
प्रथमपुरुषः, चरमपुरुषः,

जघन्यपुरुषः, समानपुरुषः, मध्यपुरुषः,
मध्यमपुरुषः, वीरपुरुषः ॥ १०३

## श्रेण्यादि कृताद्यैश्च्व्यर्थे

। ३ । १ । १०४ ।

श्रेण्यादि
एकार्थं
कृताद्यैः सह
च्व्यर्थे गम्ये
समासस्तत्पुरुषः
कर्मधारश्च स्यात् ।

श्रेणिकृताः, ऊककृताः ।
च्व्यर्थ इति किम् ?
श्रेणयः कृताः केचित् ॥१०४॥

## क्तं नञादिभिन्नैः । ३ । १ । १०५ ।

क्तान्तं
एकार्थं
नञ्प्रकारैरेव यानि भिन्नानि

तैः सह समासस्तत्पुरुषः
कर्म्मधारयश्च स्यात् ।
कृताकृतम्-पीताऽवपीतम् ।
क्तमिति किम् ?
कर्त्तव्यमकर्त्तव्यं च ।
नञादिभिन्नैरिति किम् ?
कृतं प्रकृतं,
कृतश्चाविहितं च ॥ १०५ ॥

## सेट् नाऽनिटा । ३ । १ । १०६ ।

सेट् क्तान्तं
नञादिभिन्नेनाऽनिटा सह
न समस्यते ।
क्लिशितमक्लिष्टम्, शितमशातम् ।
सेट् इति किम् ?
कृताकृतम् ।
अनिट इति किम् ?
अशितानशितम् ॥ १०६ ॥

**सन्-महत्-परमो-त्तमो-त्कृष्टं पूजायाम् । ३ । १ । १०७ ।**

एतानि
एकार्थीनि
पूजायां गम्यमानायां
पूज्यवचनैः सह
समासस्तत्पुरुषः
कर्म्मधारयश्च स्यात् ।
सत्पुरुषः महापुरुषः,
परमपुरुषः, उत्तमपुरुषः,
उत्कृष्टपुरुषः ।
पूजायामिति किम् ?
सन् घटोऽस्तीत्यर्थः ॥ १०७ ॥

**वृन्दारक-नाग-कुञ्जरैः । ३ । १ । १०८ ।**

पूजायां गम्यायां
एभिः सह
पूज्यवाचि
एकार्थं

समासस्तत्पुरुषः

कर्म्मधारयश्च स्यात् ।

गोवृन्दारकः, गोनागः, गोकुञ्जरः ।

पूजायामिति किम् ?

सुसीमो नागः ॥ १०८ ॥

## कतर–कतमौ जातिप्रश्ने

## । ३ । १ । १०९ ।

एतौ

एकार्थौ

जातिप्रश्ने गम्ये

जात्यर्थेन नाम्ना

समासस्तत्पुरुषः

कर्मधारयश्च स्यात् ।

कतरकठः, कतमगार्ग्यः ।

जातिप्रश्न इति किम् ?

कतरः शुक्लः,

कतमो गन्ता ॥ १०९ ॥

## किं क्षेपे । ३ । १ । ११० ।

निन्दायां गम्यमानायां 'किम्' इति एकार्थे कुत्स्यवाचिना समासस्तत्पुरुषः कर्मधारयश्च स्यात् । किंराजा, किंगौः । क्षेप इति किम् ? को राजा तत्र ? ॥ ११० ॥

**पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्-बष्कयणी-प्रवक्तृ-श्रोत्रिया-ध्यायक-धूर्त्त-प्रशंसा-रूढैर्जातिः । ३ । १ । १११ ।**

पोटादिभिः प्रशंसारूढैश्च सह जातिवाचि

एकार्थं समासस्तत्पुरुषः कर्मधारयश्च स्यात् । इभ्यपोटा, नागयुवतिः, अग्निस्तोकम्, दधिकतिपयम्, गोगृष्टिः, गोधेनुः, गोवशा, गोवेहत्, गोवष्कयणी, कठप्रवक्ता, कठश्रोत्रियः, कठाध्यायकः, मृगधूर्त्तः, गोमतल्लिका, गोप्रकाण्डम् ॥ १११ ॥

**चतुष्पाद् गर्भिण्या । ३ । १ । ११२ ।**

चत्वारः पादा यस्याः जातेः तद्वाचि एकार्थं गर्भिण्या समासस्तत्पुरुषः कर्म्मधारयश्च स्यात् ।

गोगर्भिणी, महिषगर्भिणी ।
जातिरित्येव ?
कालाक्षी गर्भिणी ॥ ११२ ॥

## युवा खलति--पलित-जरद्-वलिनैः

## । ३ । १ । ११३ ।

युवन् इति
एकार्थं
एभिः
समासस्तत्पुरुषः
कर्म्मधारयश्च स्यात् ।
युवखलतिः, युवपलितः,
युवजरन्, युववलिनः ॥ ११३ ॥

## कृत्य-तुल्याऽऽख्यम-जात्या

## । ३ । १ । ११४ ।

कृत्यान्तं
तुल्यपर्यायं च
एकार्थं

अ-जात्येन सह

समासस्तत्पुरुषः

कर्मधारयश्च स्यात् ।

भोज्योष्णम्, स्तुत्यपटुः ।

तुल्यसन्, सदृशमहान् ।

अ-जात्येति किम् ?

भोज्य ओदनः ॥ ११४ ॥

**कुमारः श्रमणादिना । ३ । १ । ११५ ।**

'कुमार' इति

एकार्थं

श्रमणादिना

समासस्तत्पुरुषः

कर्मधारयश्च स्यात् ।

कुमारश्रमणा, कुमारप्रव्रजिता ॥ ११५ ॥

**मयूरव्यंसकेत्यादयः । ३ । १ । ११६ ।**

एते

तत्पुरुषसमासा

निपात्यन्ते ।

मयूरव्यंसकः,
कम्बोजमुण्डः,
एहीडं कर्म,
अश्नीतपिबता क्रिया,
कुरुकटो वक्ता,
गतप्रत्यागतं,
क्रयक्रयिका,
शाकपार्थिवः
त्रिभागः,
सर्वश्वेतः ॥ ११६ ॥

## द्वन्द्वः

## चार्थे द्वन्द्वः सहोक्तौ । ३ । १ । ११७ ।

नाम नाम्ना सहोक्तिविषये
चार्थवृत्तिः
समासो द्वन्द्वः स्यात् ।
प्लक्षन्यग्रोधौ, वाक्वचम् ।
नाम नाम्नेत्यनुवृत्तावपि

'लघ्वक्षरादि'

सूत्रे एकग्रहणाद् बहूनामपि ।

धव-खदिर-पलाशाः ।

चार्थं इति किम् ?

वीप्सा-सहोक्तौ मा भूत्,

ग्रामो ग्रामो रमणीयः ।

सहोक्ताविति किम् ?

प्लक्ष न्यग्रोधश्च वीक्ष्यताम् ॥११७॥

## एकशेषः

**समानामर्थेनैकः शेषः । ३ । १ । ११८ ।**

अर्थेन समानां=समानार्थानां

सहोक्तौ गम्यायां

एकः शिष्यते,

अर्थात्=अन्ये निवर्त्तन्ते ।

वक्रश्च कुटिलश्च

वक्रौ, कुटिलौ वा ।

सितश्च शुक्लश्च श्वेतश्च

सिताः, शुक्लाः, श्वेता वा ।

अर्थेन समानामिति किम् ?

प्लक्षन्यग्रोधौ ।

सहोक्ताविर्त्येव ?

वक्रश्च कुटिलश्च दृश्यः ॥ ११८ ॥

**स्यादावसंख्येयः । ३ । १ । ११९ ।**

सर्वस्मिन् स्यादौ विभक्तौ

समानानां=तुल्यरूपाणां सहोक्तौ

एकः शिष्यते,

न तु संख्येयवाची ।

अक्षश्च (शकटस्य),

अक्षश्च (देवनः),

अक्षश्च (विभीतकः)=अक्षाः ।

स्यादाविति किम् ?

माता च (जननी),

माता च (धान्यस्य),

मातृमातरौ ।

अ-संख्येय इति किम् ?
एकश्चैकश्च ॥ ११९ ॥

त्यदादिः । ३ । १ । १२० ।

त्यदाद्यैः
अन्येन च सहोक्तौ
त्यदादिरेव
एकः शिष्यते ।
स च चैत्रश्च=तौ,
स च यश्च=यौ,
अहं च स च त्वं च=वयम् ॥ १२० ॥

भ्रातृ-पुत्राः स्वसृ-दुहितृभिः
। ३ । १ । १२१ ।

स्वस्रर्थेन सहोक्तौ भ्रात्रर्थो,
दुहित्रर्थेन च पुत्रार्थ
एकः शिष्यते ।
भ्राता च स्वसा च=भ्रातरौ,
पुत्रश्च दुहिता च=पुत्रौ ॥ १२१ ॥

**पिता मात्रा वा । ३ । १ । १२२ ।**

मातृशब्देन सहोक्तौ
पितृशब्द
एको वा शिष्यते ।
पिता च माता च=पितरौ-
मातापितरौ ॥ १२२ ॥

**श्वशुरः श्वश्र्वा वा । ३ । १ । १२३ ।**

श्वश्रूशब्देन सहोक्तौ
श्वशुर एको वा शिष्यते ।
श्वशुरौ-श्वश्रूश्वशुरौ ॥ १२३ ॥

**वृद्धो यूना तन्मात्रभेदे । ३ । १ । १२४ ।**

यूना सहोक्तौ
वृद्धवाचि
एकः शिष्यते, तन्मात्रभेदे,
न चेत्
प्रकृतिभेदः
अर्थभेदो वा
अन्यः स्यात् ।
गार्ग्यश्च गार्ग्यायणश्च=गार्ग्यौ ।

वृद्ध इति किम् ?

गर्ग-गार्ग्यायणौ ।

यूनेति किम् ?

गार्ग्य-गर्गौ ।

तन्मात्रभेद इति किम् ?

गार्ग्य-वात्स्यायनौ ॥ १२४ ॥

**स्त्री पुंवच्च । ३ । १ । १२५ ।**

वृद्धस्त्रीवाची
यूना सहोक्तौ
एकः शिष्यते,
पुल्लिङ्गश्चायं, तन्मात्रभेदे ।
गार्गी च गार्ग्यायणश्च=गार्ग्यौ,
गार्गी च गार्ग्यायणौ च=
गर्गान् ॥ १२५ ॥

**पुरुषः स्त्रिया । ३ । १ । १२६ ।**

पुरुषशब्दः प्राणिनि पुंसि रूढः
स्त्रीवाचिना सहोक्तौ

पुरुषः एकः शिष्यते,

स्त्री-पुरुषमात्रभेदश्चेत् ।

ब्राह्मणश्च ब्राह्मणी च=ब्राह्मणौ ।

पुरुष इति किम् ?

तीरं नद-नदीपतेः ।

तन्मात्रभेद इत्येव ?

स्त्री-पुंसौ ॥ १२६ ॥

**ग्राम्या-ऽशिशु-द्वि शफसङ्घे**

**स्त्री प्रायः । ३ । १ । १२७ ।**

ग्राम्या अशिशवो ये

द्विशफा=द्विखुरा अर्थात् पशवः,

एतेषां सङ्घे

स्त्री-पुरुषसहोक्तौ

प्रायः स्त्रीवाच्ची

एकः शिष्यते,

स्त्री-पुरुषमात्रभेदश्चेत् ।

गावश्च (स्त्रियः),

गावश्च (नराः),=

इमा गावः ।

ग्राम्येति किम् ?

रुरवश्चेमे रूरवश्चेमा=इमे रुरवः ।

अ-शिशु इति किम् ?

बर्कर्यश्च बर्कराश्च=बर्कराः ।

द्वि-शफ इति किम् ?

गर्दभाश्च गर्दभ्यश्च=गर्दभाः ।

सङ्घ इति किम् ?

गोश्चायं गोश्चेयं-इमौ गावौ ।

प्राय इति किम् ?

उष्ट्राश्च उष्ट्र्यश्च=उष्ट्राः ॥ १२७ ॥

**क्लीबमन्येनैकं च वा । ३ । १ । १२८ ।**

क्लीबं=नपुंसकं

अन्येनाऽक्लीबेन

सहोक्तौ

एकः शिष्यते,

क्लीबा-क्लीबमात्रभेदे,

तच्च शिष्यमाणं एकं=

एकार्थं च वा स्यात् ।

शुक्लं च शुक्लश्च

शुक्लं-शुक्ले वा ।

शुक्लं च शुक्लश्च शुक्लाश्च

=शुक्लं-शुक्लानि वा ।

अन्येनेति किम् ?

शुक्लं च शुक्लं च=शुक्ले ।

तन्मात्रभेद इत्येव ?

हिम=हिमान्यौ ॥ १२८ ॥

## पुष्यार्थाद् भे पुनर्वसुः ।३।१।१२९।

पुष्यार्थान्नक्षत्रवृत्तेः परो

नक्षत्रवृत्तिः पुनर्वसुः

सहोक्तौ

द्व्यर्थः सन्

एकार्थः स्यात् ।

उदितौ पुष्यपुनर्वसू,

उदितौ तिष्यपुनर्वसू ।

पुष्यार्थादिति किम् ?

आर्द्रापुनर्वसवः ।

पुनर्वसुरिति किम् ! पुष्यमघाः ।

भ इति किम् ?

तिष्यपुनर्वसवो बालाः ॥ १२९ ॥

## विरोधिनाम् अ-द्रव्याणां नवा द्वन्द्वः स्वैः । ३ । १ । १३० ।

द्रव्यं=गुणाद्याश्रयः,

विरोधिवाचिनां

तदाश्रयवृत्तीनां

द्वन्द्वो

एकार्थः स्यात् ।

स्वैः=स्वजातीयैरेवाऽऽरब्धश्चेत् ।

सुखदुःखम्—सुखदुःखे ।

लाभालाभम्—लाभालाभौ ।

विरोधिनामिति किम् ?

काम-क्रोधौ ।

अ-द्रव्याणामिति किम् ?

शीतोष्णे जले ।

स्वैरिति किम् ?

बुद्धि-सुख-दुःखानि ॥ १३० ॥

अश्ववडव-पूर्वापरा-ऽधरोत्तराः । ३ । १ । १३१ ।

एते त्रयोऽपि द्वन्द्वा
एकार्था वा स्युः
स्वैश्चेत् ।
अश्ववडवं-अश्ववडवौ ।
पूर्वापरम्-पूर्वापरे ।
अधरोत्तरं-अधरोत्तरे ॥ १३१ ॥

पशु-व्यञ्जनानाम् । ३ । १ । १३२ ।

पशूनां व्यञ्जनानां च
स्वैर्द्वन्द्व
एकार्थो वा स्यात् ।
गोमहिषम्-गोमहिषौ ।
दधिघृतम्-दधिघृते ॥ १३२ ॥

तरु-तृण-धान्य-मृग-पक्षिणां बहुत्वे । ३ । १ । १३३ ।

एतद्वाचिनां बह्वर्थानां
प्रत्येकं स्वैर्द्वन्द्व
एकार्थो वा स्यात् ।

प्लक्षन्यग्रोधम्-प्लक्षन्यग्रोधाः ।
कुशकाशम्-कुशकाशाः ।
तिलमाषम्-तिलमाषाः ।
ऋश्यैणम्-ऋश्यैणाः ।
हंसचक्रवाकम्-हंसचक्रवाकाः ॥१३३॥

**सेनाङ्ग-क्षुद्रजन्तूनाम् ।३।१।१३४।**

सेनाङ्गानां
क्षुद्रजन्तूनां च
बह्वर्थानां
स्वैर्द्वन्द्व
एकार्थो नित्यं स्यात् ।
अश्वरथम्, यूकालिक्षम् ॥१३४॥

**फलस्य जातौ ।३।१।१३५।**

फलवाचिनां
बह्वर्थानां
जातौ
स्वैर्द्वन्द्व
एकार्थो नित्यं स्यात् ।

बदरामलकम् ।

जाताविति किम् ?

एतानि बदरामलकानि सन्ति ॥१३५॥

## अ-प्राणि-पश्वादेः । ३ । १ । १३६ ।

प्राणिभ्यः

'पश्वादि'

सूत्रोक्तेभ्यश्च

येऽन्यद्रव्यवाचिनः

तेषां जात्यर्थानां

स्वैर्द्वन्द्व

एकार्थः स्यात् ।

आराशस्त्रि ।

जातावित्येव ? सह्यविन्ध्यौ ।

प्राण्यङ्गवर्जनं किम् ?

ब्राह्मण-क्षत्रिय-विट्-शूद्राः-

ब्राह्मण-क्षत्रिय-विट-शूद्रम् ।

गो-महिषौ- गोमहिषम् ।

प्लक्ष-न्यग्रोधौ-प्लक्ष-न्यग्रोधम् ।

अश्व-रथौ-अश्व-रथम् ।
बदराऽऽमलके-बदराऽऽमलकम् ॥१३६॥

**प्राणि-तूर्याङ्गाणाम् । ३ । १ । १३७ ।**

प्राणि-तूर्ययोरङ्गार्थानां
स्वैर्द्वन्द्व
एकार्थः स्यात् ।
कर्ण-नासिकम्-
मार्दङ्गिक-पाणविकम् ।
स्वैरित्येव ? पाणि-गृध्रौ ॥१३७॥

**चरणस्य स्थेणोऽद्यतन्यामनुवादे । ३ । १ । १३८ ।**

चरणा=कठादयः,
तद्वाचिनां
अद्यतन्यां
यौ स्थेणौ
तयोः कर्तृत्वेन सम्बन्धिनां
स्वैर्द्वन्द्वः
अनुवादविषये
एकार्थः स्यात् ।

प्रत्यष्ठात् कठ कालापम्,
उदगात् कठ–कौथुमम् ।
अनुवाद इति किम् ?
उदगुः कठकालापाः ।
अप्रसिद्धं कथयन्ति ॥ १३८ ॥

## अ-क्लीवेऽध्वर्युक्रतोः । ३ । १ । १३९ ।

अध्वर्युः=यजुर्वेदः
तद्विहितक्रतुवाचिनां
स्वैर्द्वन्द्व
एकार्थः स्यात्,
न चेत्
एते क्लीबवृत्तयः ।
अर्काश्वमेधम् ।
अ–क्लीव इति किम् ?
गवामयनादित्यानामयने ।
अध्वर्यु इति किम् ? इषुवज्रौ ।
क्रतोरिति किम् ?
दर्शपौर्णमासौ ॥ १३९ ॥

## निकटपाठस्य । ३ । १ । १४० ।

निकटः पाठो येपामध्येतॄणां
तेपां
स्वैर्द्वन्द्व
एकार्थः स्यात् ।
पदकक्रमकम् ॥ १४० ॥

## नित्य--वैरस्य । ३ । १ । १४१ ।

नित्यं=जातिनिबद्धं वैरं येपां
तेपां
स्वैर्द्वन्द्व
एकार्थः स्यात् ।
अहि-नकुलम् ।
नित्यवैरस्येति किम् ?
देवासुराः—देवासुरम् ॥ १४१ ॥

## नदी-देश-पुरां वि--लिङ्गानाम् । ३ । १ । १४२ ।

न दधिपयआदिः । ३ । १ । १४५ ।

दधिपय आद्यो
द्वन्द्व
एकार्थो न स्यात् ।
दधि-पयसी, सर्पि-र्मधुनी ॥ १४५ ॥

संख्याने । ३ । १ । १४६ ।

वर्त्तिपदार्थानां
गणने गम्ये
द्वन्द्व
एकार्थो न स्यात् ।
दश गोमहिषाः,
बहवः पाणिपादाः ॥ १४३ ॥

वाऽन्तिके । ३ । १ । १४७ ।

वर्त्तिपदार्थानां
संख्यानस्य समीपे गम्ये
द्वन्द्व
एकार्थो वा स्यात् ।

उपदशं गोमहिषम्-

उपदशा गोमहिषाः ॥ १४७ ॥

## पूर्वनिपात प्रकरणम्

### प्रथमोक्तं प्राक् । ३ । १ । १४८ ।

अत्र समासप्रकरणे
प्रथमान्तेन यन्निर्दिष्टं
तत् प्राक् स्यात् ।
आसन्नदशाः, सप्तगङ्गम् ॥१४८॥

### राजदन्ताऽऽदिषु । ३ । १ । १४९ ।

"एतेषु समासेषु
अ-प्राप्त-प्रागूतिपातं
प्राक् स्यात् ।
राजदन्तः, लिप्तवासितम् ॥ १४९ ॥

### विशेषण-सर्व्वादि-संख्यं बहुव्रीहौ । ३ । १ । १५० ।

विशेषणं सर्वादि
संख्यावाचि च
बहुव्रीहौ प्राक् स्यात् ।
चित्रगुः सर्वशुक्लः, द्विकृष्णः ॥ १५० ॥

क्तः । ३ । १ । १५१ ।

क्तान्तं सर्व
बहुव्रीहौ प्राक् स्यात् ।
कृतकटः ॥ १५१ ॥

जाति-काल-सुखादेर्नवा
। ३ । १ । १५२ ।

जातेः
कालात्
सुखादिभ्यश्च
बहुव्रीहौ
क्तान्तं वा प्राक् स्यात् ।
शाङ्गरजग्धी-जग्धशाङ्गरा ।
मासजाता-जातमासा ।
सुखजाता, जातसुखा ।
दुःखहीना, हीनदुःखा ॥ १५२ ॥

कडारजैमिनिः-जैमिनिकडारः ।

काणद्रोणः-द्रोणकाणः ॥ १५८ ॥

## धर्मार्थादिषु द्वन्द्वे ।३।१।१५९।

एषु द्वन्द्वेषु

अप्राप्तप्राक्त्वं

वा प्राक् स्यात् ।

धर्म्मोऽर्थौ, अर्थ-धर्म्मौ,

शब्दार्थौ, अर्थ-शब्दौ ॥ १५९ ॥

## लघ्वक्षरा-ऽसखीदुत्-स्वराद्यदल्प-स्वरार्च्यमेकम् ।३।१।१६०।

लघ्वक्षरं

सखिवर्जेदुदन्तं

स्वराद्यकारान्तं

अल्पस्वरं

पूज्यवाचि

चैकं

द्वन्द्वे प्राक् स्यात् ।

शर-शीर्षम्,
अग्नी-षोमौ,
वायु-तोयम् ।
अ-सखीति किम् ।
सुत-सखायौ, अस्त्र-शस्त्रम् ।
प्लक्ष-न्यग्रोधौ, श्रद्धामेधे ।
लघ्वादि इति किम् ?
कुक्कुटमयूरौ, मयूरकुक्कुटौ ।
एकमिति किम् ?
शङ्ख-दुन्दुभि-वीणाः ।
द्वन्द्व इत्येव ? विस्पष्टपटुः ॥ १६० ॥

**मास-वर्ण-भ्रात्रऽनुपूर्वम् ।३।१।१६१।**

एतद् वाचि
द्वन्द्वेऽनुपूर्वं
प्राक् स्यात् ।
फाल्गुन-चैत्रौ,
ब्राह्मण-क्षत्रियौ,
ब्राह्मण-क्षत्रिय-वैश्याः,
बलदेव-वासुदेवौ ॥ १६१ ॥

**भ-ऋतु-नुल्यस्वरम् । ३ । १ । १६२ ।**

॥ श्री वर्धमानस्वामिने नमः ॥

अथ समासाश्रयकार्य–प्रकरणम्

तृतीयाध्यायस्य–

# द्वितीयः पादः

## परस्परा–ऽन्योऽन्येतरेतरस्याम्
## स्यादेर्वा–ऽपुंसि । ३ । १ ।

एषां
    अ–पुंवृत्तीनां
        स्यादेः

आम् वा स्याद् ।
        इमे सख्यौ कुले वा ।

परस्परां–परस्परं;
    अन्योऽन्यां–अन्योऽन्यं,
        इतरेतरां–इतरेतरं,
            भोजयतः

अत इति किम् ?

अधिस्त्रि ।

अ-पञ्चम्या इति किम् ?

उपकुम्भात् ॥ २ ॥

## वा तृतीयायाः । ३ । २ । ३ ।

अदन्तस्याऽव्ययीभावस्य

तृतीयाया

अम् वा स्यात् ।

किं नः उपकुम्भम्-

किं नः उपकुम्भेन ।

अव्ययीभावस्येति किम् ?

प्रियोपकुम्भेन ॥ ३ ॥

## सप्तम्या वा । ३ । २ । ४ ।

अदन्तस्याऽव्ययीभावस्य

सप्तम्या

अम् वा स्यात् ।

उपकुम्भम्-उपकुम्भे निधेहि ।

अव्ययस्य
स्यादेर्लुप् स्यात् ।
स्वः, प्रातः ।
अव्ययस्येति किम् ? अत्युच्चैसः ॥ ७ ॥

## ऐकार्थ्ये । ३ । २ । ८ ।

ऐकार्थ्यं=ऐकपद्यं
तन्निमित्तस्य
स्यादेर्लुप् स्यात् ।
चित्रगुः, पुत्रीयति, औपगवः ।
अत एव लुब्विधानाद्
"नाम नाम्ना"
स्युक्तावपि
स्याद्यन्तानां समासः स्यात् ।
ऐकार्थ्य इति किम् ?
चित्रा गावो यस्ये
त्यादिवाक्ये मा भूत् ॥८॥

## न नाम्येकस्वरात् खित्युत्तरपदेऽमः । ३ । २ । ९ ।

अव्ययस्य
स्यादेर्लुप् स्यात् ।
स्वः, प्रातः ।
अव्ययस्येति किम्? अत्युच्चैसः ॥ ७ ॥

ऐकार्थ्ये ।३।२।८।

ऐकार्थ्यं=ऐकपद्यं
तन्निमित्तस्य
स्यादेर्लुप् स्यात् ।
चित्रगुः, पुत्रीयति, औपगवः ।
अत एव लुब्विधानाद्
" नाम नाम्ना "
न्युक्तावपि
स्याद्यन्तानां समासः स्यात् ।
ऐकार्थ्य इति किम्?
चित्रा गावो यस्ये
त्यादिवाक्ये मा भूत् ॥८॥

न नाम्येकस्वरात् खित्युत्तरपदेऽमः ।३।२।९।

अत्र समासे ङसेर्लुबभावो निपात्यते । ब्राह्मणाच्छंसिनौ । निपातनाद् ऋत्विग्=विशेषाद् अन्यत्र लुबेव । ब्राह्मणशंसिनी स्त्री ॥ ११ ॥

**ओजो-ऽञ्जः-सहो-ऽम्भस्-तमस्-तपसः टः । ३ । २ । १२ ।**

एभ्यः परस्य टावचनस्य उत्तरपदे परे लुब् न स्यात् । ओजसाकृतम्-अञ्जसाकृतम्, सहसाकृतम्-अम्भसाकृतम्, तमसाकृतम्-तपसाकृतम्, ट इति किम् ? ओजोभावः ॥ १२ ॥

**पुम्-जनुषोऽनुजान्धे । ३ । २ । १३ ।**

पुम्-जनुर्भ्यां परस्य टो
यथासंख्यं
अनुजे-ऽन्धे चोत्तरपदे
लुप् न स्यात्,
पुंसाऽनुजः, जनुपाऽन्धः ।
ट इत्येव ? पुमनुजा ॥ १३ ॥

## आत्मनः पूरणे ।३।२।१४।

अस्मात् परस्य टः
पूरणप्रत्ययान्ते उत्तरपदे
लुप् न स्यात् ।
आत्मनाद्वितीयः, आत्मनापष्ठः ॥ १४ ॥

## मनसश्चाऽऽज्ञायिनि ।३।२।१५।

मनस आत्मनश्च परस्य ट
आज्ञायिन्युत्तरपदे
लुप् न स्यात् ।
मनसाऽऽज्ञायी, आत्मनाऽऽज्ञायी ॥ १५ ॥

## नाम्नि ।३।२।१६।

मनसः परस्य टः
संज्ञाविषये उत्तरपदे परे
लुप् न स्यात् ।
मनसादेवी ।
नाम्नीति किम् ?
मनोदत्ता कन्या ॥ १६ ॥

परा-ऽऽत्मभ्यां ङेः । ३ । २ । १७ ।

आभ्यां परस्य
ङेवचनस्य
उत्तपदे परे
नाम्नि लुप् न स्यात् ।
परस्मैपदम्, आत्मनेपदम् ।
नाम्नीत्येव ? परहितम् ॥ १७ ॥

अद्-व्यञ्जनात् सप्तम्या बहुलम् । ३ । २ । १८ ।

अदन्ताद्
व्यञ्जनान्ताच्च परस्याः
सप्तम्या

बहुलं नाम्नि

लुप् न स्यात् ।

अरण्येतिलकाः, युधिष्ठिरः ।

अद्-व्यञ्जनादिति किम् ?

भूमिपाशः ।

नाम्नीत्येव ? तीर्थकाकः ॥ १८ ॥

**प्राक् कारस्य व्यञ्जने । ३ । २ । १९ ।**

राजलभ्यो रक्षानिर्वेशः=कारः ।

प्राचां देशे यः कारः

तस्य संज्ञायां गम्यमानायां

अद्-व्यञ्जनात् परस्याः

सप्तम्या

व्यञ्जनादौ

उत्तरपदे

लुप् न स्यात् ।

मुकुटेकार्षापणः, समिधिमापकः ।

प्राक् इति किम् ? यूथपशुः ।

उदीचामयं न प्राचां ।

कार इति किम् ?

अभ्यर्हितपशुः ।

व्यञ्जन इति किम् ?

अविकटोरणः ॥ १९ ॥

## तत्पुरुषे कृति । ३ । २ । २० ।

अद्-व्यञ्जनात् परस्याः

सप्तम्याः

कृदन्ते उत्तरपदे

तत्पुरुषे

लुप् न स्यात् ।

स्तम्बेरमः, भस्मनिहुतम् ।

तत्पुरुष इति किम् ?

भन्वकारकः ।

अद्-व्यञ्जनादित्येव ?

कुरुचरः ॥ २० ॥

## मध्या-न्ताद् गुरौ । ३ । २ । २१ ।

आभ्यां परस्याः

सप्तम्या

गुरौ

उत्तरपदे

लुब् न स्यात् ।

मध्येगुरुः, अन्तेगुरुः ॥ २१ ॥

**अ--मूर्द्ध-मस्तकात् स्वाङ्गाद-कामे ।३।२।२२।**

मूर्द्ध-मस्तकवर्जात्

स्वाङ्गवाचिनः

अद्-व्यञ्जनात् परस्याः

सप्तम्याः

कामवर्जे उत्तरपदे

लुब् न स्यात् ।

कण्ठेकालः

अ-मूर्द्धमस्तकादिति किम् ?

मूर्द्धशिखः, मस्तकशिखः ।

अ-काम इति किम् ?

मुखकामः ॥ २२ ॥

**न्धे घञि नवा ।३।२।२३।**

बन्धे घञन्ते उत्तरपदे
अद्-व्यञ्जनात् परस्याः
सप्तम्या
लुब् वा न स्यात् ।
हस्तबन्धः-हस्तेबन्धः,
चक्रेबन्धः-चक्रबन्धः ।
घञि इति किम् ?
अजन्ते,
हस्तबन्धः ॥ २३ ॥

## कालात् तन-तर-तम-काले ।३।२।२४।

अद्-व्यञ्जनान्तात् कालवाचिनः
परस्याः
सप्तम्याः
तनादिप्रत्ययेषु
काले चोत्तरपदे
वा लुब् न स्यात् ।
पूर्वाह्णेतनः-पूर्वाह्णतनः ।
पूर्वाह्णेतराम्-पूर्वाह्णेतराम् ।

पूर्वाह्णेतमाम्—पूर्वाह्णतमाम् ।
पूर्वाह्णेकाले—पूर्वाह्णकाले ।
कालादिति किम् ?
शुक्लतरे, शुक्लतमे ।
अद्-व्यञ्जनादित्येव ?
रात्रितरायाम् ॥ २४ ॥

## शय-वासि-वासेष्व-कालात्

। ३ । २ । २५ ।

अ-कालवाचिनः
अद्-व्यञ्जनात् परस्याः
सप्तम्याः
एषूत्तरपदेषु
लुब् वा न स्यात् ।
बिलेशयः-बिलशयः ।
वनेवासी-वनवासी ।
ग्रामेवासः-ग्रामवासः ।
अ-कालादिति किम् ?
पूर्वाह्णशयः ॥ २५ ॥

## वर्ष-क्षर-वराऽप्-सरः-शरो-रस्-मनसो जे ।३।२।२६।

एभ्यः परस्याः सप्तम्याः
जे उत्तरपदे
लुब् वा न स्यात् ।
वर्षेजः-वर्षजः ।
क्षरेजः-क्षरजः ।
वरेजः-वरजः ।
अप्सुजम्-अब्जम् ।
सरसिजम्-सरोजम् ।
शरेजम्-शरजम् ।
उरसिजः-उरोजः ।
मनसिजः-मनोजः ॥ २६ ॥

## द्यु-प्रावृट्-वर्षा-शरत्-कालात् ।३।२।२७।

एभ्य परस्याः
सप्तम्याः

ये उत्तरपदे

लुब् न स्यात्,

दिविजः, प्रावृपिजः,

वर्षासुजः, शरदिजः

कालेजः ॥ २७ ॥

## अपो य-योनि-मति-चरे ।३।२।२८।

अपः परस्याः सप्तम्याः

ये प्रत्यये

योन्यादौ च उत्तरपदे

लुब् न स्यात्

अप्सव्यः, अप्सुयोनिः,

अप्सुमतिः, अप्सुचरः ॥ २८ ॥

## नेन्--सिद्ध-स्थे ।३।२।२९।

इन्प्रत्ययान्ते

सिद्धस्थयोश्चोत्तरपदयोः

न लुब् न स्यात्,

भवत्येवेत्यर्थः ।

स्थण्डिलवर्त्ती, साङ्काश्यसिद्धः
समस्थः ॥ २९ ॥

षष्ठ्याः क्षेपे । ३ । २ । ३० ।

उत्तरपदे परे
क्षेपे गम्ये
षष्ठ्याः लुब् न स्यात् ।
चौरस्यकुलम् ॥ ३० ॥

पुत्रे वा । ३ । २ । ३१ ।

पुत्रे उत्तरपदे
क्षेपे
षष्ठ्याः
लुब् वा न स्यात् ।
दास्याःपुत्रः–दासीपुत्रः ॥ ३१ ॥

पश्यत्-वाग्-दिशो हर-युक्ति-
दण्डे । ३ । २ । ३२ ।

एभ्यः परस्याः षष्ठ्याः
यथासंख्यं हरादौ उत्तरपदे

लुब् न स्यात् ।

पश्यतोहरः, वाचोयुक्तिः,

दिशोदण्डः ॥ ३२ ॥

## अदसोऽकञा-यन-णोः । ३ । २ । ३३ ।

अदसः परस्याः षष्ठ्याः

अकञ्विषये

उत्तरपदे आयनणि च परे

लुब् न स्यात् ।

आमुष्यपुत्रिका, आमुष्यायणः ॥ ३३ ॥

## देवानांप्रियः । ३ । २ । ३४ ।

अत्र

षष्ठ्याः

लुब् न स्यात् ।

देवानांप्रियः ॥ ३४ ॥

## शेप-पुच्छ-लाङ्गूलेषु नाम्नि शुनः । ३ । २ । ३५ ।

शुनः परस्याः षष्ठयाः
शेपादौ
उत्तरपदे
संज्ञायां
लुप् न स्यात् ।
शुनःशेपः,
शुनःपुच्छः,
शुनोलङ्गूलकः ॥ ३५ ॥

**वाचस्पति-वास्तोष्पति-दिवस्पति-दिवोदासम् । ३ । २ । ३६ ।**

एते समासाः
षष्ठ्यलुपि
निपात्यन्ते
नाम्नि ।
वाचस्पतिः,
वास्तोष्पतिः,
दिवस्पतिः,
दिवोदासः ॥ ३६ ॥

**ऋतां विद्या-योनिसम्बन्धे ।३।२।३७।**

ऋदन्तानां
विद्यया योन्या वा
कृते सम्बन्धे
हेतौ सति
प्रवृत्तानां
षष्ठ्याः
तत्रैव हेतौ सति
प्रवृत्ते उत्तरपदे
लुप् न स्यात् ।
होतुःपुत्रः, पितुःपुत्रः,
पितुरन्तेवासी ।
ऋतामिति किम् ?
आचार्यपुत्रः ।
विद्या-योनिसम्बन्ध इति किम् ?
भर्तृगृहम् ॥ ३७ ॥

**स्वसृ-पत्योर्वा । ३ । २ । ३८ ।**

विद्या-योनिसम्बन्धनिमित्तानां
ऋदन्तानां

षष्ठ्याः
स्वसृ-पत्योः उत्तरपदयोः
योनिसम्बन्धनिमित्तयोः
लुब् वा न स्यात् ।
होतुःस्वसा-होतृस्वसा ।
स्वसुःपतिः-स्वसृपतिः ।
विद्या-योनिसम्बन्ध इत्येव ?
भर्तृस्वसा, होतृपतिः ॥ ३८ ॥

आ द्वन्द्वे । ३ । २ । ३९ ।

विद्या-योनिसम्बधनिमित्तानां
ऋदन्तानां यो द्वन्द्वः
तस्मिन् सत्युत्तरपदे
पूर्वपदस्याऽऽत् स्यात् ।
होतापोतारौ, मातापितरौ ।
ऋतामित्येव ? गुरु-शिष्यौ ।
विद्या-योनिसम्बन्ध इत्येव ?
कर्तृ-कारयितारौ ॥ ३९ ॥

पुत्रे । ३ । २ । ४० ।

पुत्रे उत्तरपदे
विद्या-योनिसम्बन्धानां
ऋदन्तानां
द्वन्द्वे
आः स्यात् ।
मातापुत्रौ, होतापुत्रौ ॥ ४

**वेदसहश्रुताऽ--वायुदेवताना**

। ३ । २ । ४१ ।

एषां द्वन्द्वे
पूर्वपदस्यः
उत्तरपदे
आः स्यात् ।
इन्द्रासोमौ ।
वेदेति किम् ? ब्रह्मप्रजापती ।
सहेति किम् ? विष्णुशक्रौ ।
श्रुतेति किम् ? चन्द्रसूर्यौ ।
वायुवर्जनं किम् ? वाय्वग्नी ।
देवतानामिति किम् ?

## ईः षोम-वरुणेऽग्नेः । ३ । २ । ४२ ।

वेदसहश्रुताऽवायुदेवतानां

द्वन्द्वे

षोमे वरुणे चोत्तरपदे

अग्नेः

ईः स्यात् ।

षोमेति निर्देशाद् ईयोगे षत्वं च ।

अग्नीषोमौ, अग्नीवरुणौ ।

देवताद्वन्द्व इत्येव ?

अग्निसोमौ वटू ॥ ४२ ॥

## इर्वृद्धिमत्य-विष्णौ । ३ । २ । ४३ ।

विष्णुवर्जे वृद्धिमति

उत्तरपदे

देवताद्वन्द्वे

अग्नेः

इः स्यात् ।

आग्निवारुणीमनड्वाहीमालभेत ।

वृद्धिमतीति किम् ?

अग्नीवरुणौ ।

अ-विष्णाविति किम् ?

आग्नावैष्णवं चरुं निर्वपेत् ॥ ४३ ॥

**दिवो द्यावा । ३ । २ । ४४ ।**

देवताद्वन्द्वे

दिवः

उत्तरपदे

द्यावा इति स्यात् ।

द्यावाभूमी ॥ ४४ ॥

**दिवस्-दिवः पृथिव्यां वा । ३ । २ । ४५ ।**

देवताद्वन्द्वे

दिवः पृथिव्यां

उत्तरपदे

एतौ वा स्याताम् ।

दिवस्पृथिव्यौ-

दिवःपृथिव्यौ-

द्यावापृथिव्यौ ॥ ४५ ॥

## उषासोषसः । ३ । २ । ४६ ।

देवताद्वन्द्वे
उषसः
उत्तरपदे
उषासा स्यात् ।
उषासासूर्यम् ॥ ४६ ॥

## मातरपितरं वा । ३ । २ । ४७ ।

मातृ-पित्रोः
पूर्वोत्तरपदयोः
द्वन्द्वे
ऋतः
अरो वा निपात्यते ।
मातरपितरयोः-मातापित्रोः ॥ ४७ ॥

## वर्चस्कादिष्ववस्करादयः ।३।२।४८।

एषु अर्थेषु एते
कृतश-ष-साद्युत्तरपदाः
साधवः स्युः ।
अवस्करोऽन्नमलम्, अवकारोऽन्यः ।

अपस्करो रथाङ्गम्,

अपकरोऽन्यः ॥ ४.

परतः स्त्री पुंवत् स्त्र्येकार्थेऽ
।३।२।४९।

परतो=विशेष्यवशात् स्त्रीलिङ्गः,
स्त्रीवृत्तौ एकार्थे उत्तरपदे
पुंवत् स्यात्,
न तूङन्तः ।
दर्शनीयभार्यः ।
परत इति किम् ? द्रोणीभार्यः ।
स्त्रीति किम् ? खलपुदृष्टिः ।
स्त्र्येकार्थे इति किम् ?
गृहिणीनेत्रः,
कल्याणीमाता ।
अनूङिति किम् ?
करभोरूभार्यः ॥ ४०,

यङ्-मानि-पित्तद्धिते । ३ । २ ।

क्यङि मानिनि चोत्तरपदे
पित्तद्धिते च परतः
स्त्रीलिङ्गोऽनूङ्
पुंवत् स्यात् ।
श्येतायते, दर्शनीयमानी ।
अयमस्याः, अजथ्यं यूथम् ॥५०॥

## जातिश्च णि-तद्धितय-स्वरे

।३।२।५१।

अन्या=परतः स्त्री
जातिश्च
णौ प्रत्यये
यादौ स्वरादौ च तद्धिते
विषयभूते
पुंवत् स्याद्
अनूङ् ।
पटयति, एत्यः, भावत्कम् ।
जातिः—
दारद्यः, गार्गः ।

तद्धितेति किम् ?

हस्तिनीयति, हस्तिन्यः ॥ ५१ ॥

## एयेऽग्नायी । ३ । २ । ५२ ।

एयप्रत्यये

अग्नायी एव

परतः स्त्री

पुंवत् स्यात् ।

[illegible] ।

पूर्वेण सिद्धे नियमार्थमिदम् ।

आग्नेयः ॥ ५२ ॥

## नाऽप्-प्रियाऽऽदौ । ३ । २ । ५३

अपप्रत्ययान्ते स्त्र्येकार्थे उत्तरपदे

प्रियादौ च

परतः

स्त्री

पुंवत् स्यात् ।

कल्याणीपञ्चमा रात्रयः.

कल्याणीप्रियः ।
अप्-प्रियादाविति किम् ?
कल्याणपञ्चमीकः पक्षः ॥ ५३ ॥

## तद्धिताऽककोपान्त्यपूरण्याख्याः । ३ । २ । ५४ ।

तद्धितस्याकप्रत्ययस्य च
क उपान्त्यो यासां ताः
पूरणप्रत्ययान्ताः संज्ञाश्च
परतः स्त्री
पुंवत् स्युः ।
मद्रिकाभार्यः, कारिकाभार्यः,
पञ्चमीभार्यः, दत्ताभार्यः ।
तद्धिताकेति किम् ?
पाकभार्यः ॥ ५४ ॥

## तद्धितः स्वरवृद्धिहेतुररक्त-विकारे । ३ । २ । ५५ ।

रक्त-विकाराभ्यामऽन्यार्थः
स्वरवृद्धिहेतुः
च तद्धितः
तदन्तः
परतः स्त्री
पुंवत् स्यात् ।
माथुरीभार्यः ।
स्वरेति किम् ?
वैयाकरणभार्यः ।
वृद्धिहेतुरिति किम् ?
अर्द्धप्रस्थभार्यः ।
अ-रक्तविकार इति किम् ?
काषायबृहतिकः, लौहेयः ॥ ५५ ॥

## स्वाङ्गाद् ङीर्जातिश्चाऽ-मानिनि
। ३ । २ । ५६ ।

स्वाङ्गाद् यो ङीः
तदन्तो
जातिवाची च

परतः स्त्री
पुंवत् न स्यात्,
न तु मानिनि ।
दीर्घकेशीभार्यः, कठीभार्यः,
शूद्राभार्यः ।
स्वाङ्गादिति किम् ? पट्वभार्यः ।
अ-मानिनीति किम् ?
दीर्घकेशमानिनी ॥ ५६ ॥

## पुंवत् कर्म्मधारये । ३ । २ । ५७ ।

परतः स्त्री
अनूङ्
कर्म्मधारये सति
स्त्र्येकार्थे उत्तरपदे परे
पुंवत् स्यात् ।
कल्याणप्रिया, मद्रकभार्या,
माथुरवृन्दारिका,
चन्द्रमुखवृन्दारिका ।
अनूङित्येव ?
ब्रह्मबन्धूवृन्दारिका ॥ ५७ ॥

रिति । ३ । २ । ५८ ।

परतः स्त्री
अनूङ्
रिति प्रत्यये
पुंवत् स्यात् ।
पटुजातीयाः, कठदेशीया ॥ ५८ ॥

त्व-ते गुणः । ३ । २ । ५९ ।

परतः स्त्री
अनूङ् गुणवचनः
त्व-तयोः प्रत्ययोः
पुंवत् स्यात् ।
पटुत्वम्, पटुता ।
गुण इति किम् ?
कठीत्वम् ॥ ५९ ॥

च्वौ क्वचित् । ३ । २ । ६० ।

परतः स्त्री
अनूङ्
च्वौ क्वचित्

पुंवत् स्यात् ।

महद्भूता कन्या ।

क्वचिदिति किम् ?

गोमतीभूता ॥ ६० ॥

## सर्वादयोऽस्यादौ । ३ । २ । ६१ ।

सर्वादिः

परतः स्त्री

पुंवत् स्यात्,

न तु स्यादौ ।

सर्वस्त्रियः, भवत्पुत्रः ।

अ-स्यादाविति किम् ?

सर्वस्यै ॥ ६१ ॥

## मृगक्षीराऽऽदिषु वा । ३ । २ । ६२ ।

एषु समासेषु

परतः स्त्री

उत्तरपदे

पुंवत् वा स्यात् ।

मृगक्षीरम्-मृगक्षीरम् ।

काकशावः-काकीशावः ॥ ६२ ॥

**ऋदुदित् तर-तम-रूप-कल्प-ब्रुव-चेलट्-गोत्र-मत-हते वा ह्रस्वश्च । ३ । २ । ६३ ।**

ऋदुदित्
परतः स्त्री
तरादिषु प्रत्ययेषु
ब्रुवादौ च
स्त्र्येकार्थे उत्तरपदे
ह्रस्वान्तः
पुंवच्च
वा स्यात् ।

पचन्तितरा,
पचत्तरा,
पचन्तीतरा ।

श्रेयसितरा,
श्रेयस्तरा,
श्रेयसीतरा ।

पचन्तितमा,
पचत्तमा,
पचतीतमा ।

श्रेयसितमा,
श्रेयस्तमा,
श्रेयसीतमा ।
पचन्तिरूपा,
पचद्रूपा,
पचन्तीरूपा ।
विदुषिरूपा,
विद्वद्रूपा,
विदुषीरूपा ।
पचन्तिकल्पा,
पचत्कल्पा,
पचन्तीकल्पा ।
विदुषिकल्पा,
विद्वत्कल्पा,
विदुषीकल्पा ।
श्रेयसिकल्पा,
श्रेयस्कल्पा,
श्रेयसीकल्पा ।

पचन्तिभ्रुवा,
पचद्भ्रुवा,
पचन्तीभ्रुवा ।

श्रेयसिभ्रुवा,
श्रेयोभ्रुवा,
श्रेयसीभ्रुवा ।

पचन्तिचेली,
पचच्चेली,
पचन्तीचेली ।

श्रेयसिचेली,
श्रेयश्चेली,
श्रेयसीचेली ।

पचन्तिगोत्रा,
पचद्गोत्रा,
पचन्तीगोत्रा ।

श्रेयसिगोत्रा,
श्रेयोगोत्रा,
श्रेयसीगोत्रा ।

पचन्तिमता,
पचन्मता,
पचन्तीमता ।
श्रेयसिमता,
श्रेयोमता,
श्रेयसीमता ।
पचन्तिहता,
पचद्धता,
पचन्तीहता ।
श्रेयसिहता,
श्रेयोहता,
श्रेयसीहता ॥६३॥

ङ्यः । ३ । २ । ६४ ।

ङ्यन्तायाः
परतः स्त्रियाः
तरादिषु प्रत्ययेषु
ब्रुवादिषु चोत्तरपदेषु
एकार्थे
ह्रस्वः स्यात् ।

गौरितरा, गौरितमा,
नर्त्तकिरूपा, कुमारिकल्पा,
ब्राह्मणिब्रुवा, गार्गिचेली,
ब्राह्मणिगोत्रा,
गार्गिमता, गौरिहता ॥ ६४ ॥

## भोगवत्-गौरिमतोर्नाम्नि
## । ३ । २ । ६५ ।

अनयोः ङ्यन्तयोः
संज्ञायां
तरादिषु प्रत्ययेषु
ब्रुवादौ चोत्तरपदे
एकार्थे
ह्रस्वः स्यात् ।
भोगवतितरा, गौरिमतितमा,
भोगवतिरूपा, गौरिमतिकल्पा,
भोगवतिब्रुवा, गौरिमतिचेली.

गौरिमतिमता,

भोगवतिहता ।

नाम्नीति किम् ?

भोगवतितरा,

भोगवत्तरा,

भोगवतीतरा ॥ ६५ ॥

## नवैक-स्वराणाम् । ३ । २ । ६६ ।

एकस्वरस्य ङ्यन्तस्य

तरादौ प्रत्यये

ब्रुवादौ चोत्तरपदे

स्त्र्येकार्थे

वा ह्रस्वः स्यात् ।

स्त्रितरा—स्त्रीतरा ।

श्रितरा—श्रीतरा ।

श्रितमा—श्रीतमा ।

श्रिब्रुवा—श्रीब्रुवा ।

एकस्वराणामिति किम् ?

कुटीतरा ॥ ६६ ॥

स्त्रीवृत्तेर्महतः

करादौ उत्तरपदे

नित्यं डाः स्यात् ।

महाकरः,

महावासः,

महाविशिष्टः ॥ ६९ ॥

## जातीयै-कार्थे-ऽच्वेः । ३ । २ । ७० ।

महतोऽच्व्यन्तस्य

जातीयरि

ऐकार्थ्ये चोत्तरपदे

डाः स्यात् ।

महाजातीयः, महावीरः ।

जातीयैकार्थ्य इति किम् ?

महत्तरः ।

अ–च्वेरिति किम् ?

महद्भूता कन्या ॥ ७० ॥

## न पुंवन्निषेधे । ३ । २ । ७१ ।

हविपीति किम् ? अष्टकपालम् ।
कपाल इति किम् ?
अष्टपात्रं हविः ॥ ७३ ॥

## गवि युक्ते । ३ । २ । ७४ ।

युक्तेऽर्थे गव्युत्तरपदे
अष्टनो दीर्घः स्यात् ।
अष्टागवं शकटम् ।
युक्त इति किम् ?
अष्टगुश्रेत्रः ॥ ७४ ॥

## नाम्नि । ३ । २ । ७५ ।

अष्टनः
उत्तरपदे
संज्ञायां
दीर्घः स्यात् ।
अष्टापदः कैलाशः ।
नाम्नीति किम् ? अष्टदंष्ट्रः ॥ ७५ ॥

**कोटर-मिश्रक-सिध्रक-पुरग-सारिकस्य वणे । ३ । २ । ७६ ।**

एषां
कृत-पन्ये वने उत्तरपदे
संज्ञायां
दीर्घः स्यात् ।
कोटरावणम्,
मिश्रकावणम्,
सिध्रकावणम्,
पुरगावणम्,
सारिकावणम् ॥ ७६ ॥

**अञ्जनादीनां गिरौ । ३ । २ । ७७ ।**

एषां गिरौ उत्तरपदे
नाम्नि दीर्घः स्यात् ।
अञ्जनागिरिः, कुक्कुटागिरिः ॥ ७७ ॥

**अन-जिरादि-बहुस्वर-शरादीनां मतौ । ३ । २ । ७८ ।**

अजिरादिवर्ज-बहुस्वराणां
शरादीनां च
मतौ प्रत्यये
नाम्नि
दीर्घः स्यात् ।
उदुम्बरावती,
शरावती,
वंशावती ।
अन-जिरादीति किम् ?
अजिरवती, हिरण्यवती ॥ ७८ ॥

**ऋषौ विश्वस्य मित्रे ।३।२।७९।**

ऋषावर्थे
मित्रे उत्तरपदे
विश्वस्य
नाम्नि
दीर्घः स्यात् ।
विश्वामित्रः ॥ ७९ ॥

**नरे ।३।२।८०।**

नरे उत्तरपदे
नाम्नि
विश्वस्य
दीर्घः स्यात् ।
विश्वानरः कश्चित् ॥८०॥

**वसु-राटोः । ३ । २ । ८१ ।**

अनयोः उत्तरपदयोः
विश्वस्य दीर्घः स्यात् ।
विश्वावसुः, विश्वाराट् ॥ ८१ ॥

**वलच्य-पित्रादेः । ३ । २ । ८२ ।**

वलच्प्रत्यये
पित्रादिवर्जानां
दीर्घः स्यात् ।
आसुतीवलः ।
अ-पित्रादेरिति किम् ?
पितृवलः, मातृवलः ॥ ८२ ॥

**चितेः कचि । ३ । २ । ८३ ।**

चितेः
कचि
दीर्घः स्यात् ।
एकचितीकः ॥ ८३ ॥

**स्वामिचिह्नस्याऽ-विष्टा-ऽष्ट-पञ्च-भिन्न-छिन्न--च्छिद्र--स्रुव--स्वस्तिकस्य कर्णे**
। ३ । २ । ८४ ।

स्वामी चिह्नयते येन तद्वाचिनो
विष्टादिवर्जस्य
कर्णे उत्तरपदे
दीर्घः स्यात् ।
दात्राकर्णः पशुः ।
स्वामिचिह्नस्येति किम् ?
लम्बकर्णः ।
विष्टादिवर्जं किम् ?
विष्टकर्णः, अष्टकर्णः ॥ ८४ ॥

## गति-कारकस्य नहि-वृति-वृषि-व्यधि-रुचि-सहितनौ क्वौ । ३ । २ । ८५ ।

गति-कारकयोः
न ह्यादौ
क्विबन्ते उत्तरपदे
दीर्घः स्यात् ।

उपानत्, नीवृत्,
प्रावृट्, श्वावित्,
नीरुक्, ऋतीषट्,
जलासट्, परीतट् ॥ ८५ ॥

## घञ्युपसर्गस्य बहुलम् । ३ । २ । ८६ ।

घञन्ते उत्तरपदे
उपसर्गस्य
बहुलं दीर्घः स्यात् ।
नीक्लेदः, नीवारः ।

बाहुलकात् क्वचिद्वा,
प्रतीवेशः-प्रतिवेश' ।

क्वचित्,

विपादः, निपादः ॥ ८६ ॥

## नामिनः काशे । ३ । २ । ८७ ।

नाम्यन्तस्योपसर्गस्य

अजन्ते काशे उत्तरपदे

दीर्घः स्यात् ।

नीकाशः, वीकाशः ।

नामिन इति किम् ?

प्रकाशः ॥ ८७ ॥

## दस्ति । ३ । २ । ८८ ।

दो यः

तादिरादेशः

तस्मिन् परे

नाम्यन्तस्योपसर्गस्य

दीर्घः स्यात् ।

नीत्तम्, वीत्तम् ।

द इति किम्? वितीर्णम् ।

तीति किम्? सुदत्तम् ॥ ८८ ॥

कृतदीर्घत्वादयो निपात्यन्ते । एकादश, षोडश, षड्दन्ता अस्य षोडन, षोढा, षड्ढा ॥ ९१ ॥

**द्वि-त्र्यष्टानां द्वा-त्रयो-ऽष्टाः प्राक्शताद् अन--शीति-बहुव्रीहौ । ३ । २ । ९२ ।**

एषां यथासंख्यं एते प्राक्शतात् संख्यायां उत्तरपदे स्युः, नत्वशीतौ बहुव्रीहिविषये च । द्वादश, त्रयोविंशतिः, अष्टात्रिंशत् । प्राक्शतादिति किम् ? द्विशतम्, त्रिशतम्, अष्टसहस्रम् ।

हृल्लासः, हृल्लेखः,
हार्दम्, हृद्यः ॥ ९४ ॥

पदः पादस्याऽज्याऽऽति-गो-पहते ।३।२।९५।

पादस्य
अज्यादौ
उत्तरपदे
पदः स्यात् ।
पदाजिः, पदातिः,
पदगः, पदोपहतः ॥ ९५ ॥

हिम-हति-काषि-ये पद् ।३।२।९६।

हिमादौ उत्तरपदे
ये च प्रत्यये
पादस्य
पद् स्यात् ।
पद्धिमम्, पद्धतिः,
पत्काषी, पद्याः शर्कराः ॥ ९६ ॥

पद्घोषः–पादघोषः ।

पन्मिश्रः–पादमिश्रः ॥ ९८ ॥

## नस् नासिकायाः तः–क्षुद्रे

। ३ । २ । ९९ ।

नासिकायाः

तस्प्रत्यये क्षुद्रे चोत्तरपदे

नस् स्यात् ।

नस्तः, नःक्षुद्रः ॥ ९९ ॥

## येऽ–वर्णे । ३ । २ । १०० ।

नासिकायाः

य प्रत्यये वर्णादन्यत्रार्थे

नस् स्यात् ।

नस्यम् ।

य इति किम् ?

नासिक्यं पुरम् ।

अ–वर्ण इति किम् ?

नासिक्यो वर्णः ॥ १०० ॥

## उदकस्याऽदः पेषं-धि-वास-वाहने । ३ । २ । १०४ ।

उदकस्य पेषमादौ उत्तरपदे उदः स्यात् ।

उदपेषं पिनष्टि, उदधिर्घटः, उदवासः, उदवाहनः ॥ १०४ ॥

## वैकव्यञ्जने पूर्ये । ३ । २ । १०५ ।

उदकस्याऽसंयुक्तव्यञ्जनादौ पूर्यमाणार्थे उत्तरपदे उदो वा स्यात् ।

उदकुम्भः-उदककुम्भः ।

व्यञ्जन इति किम ? उदकामत्रम् ।

एकेति किम् ? उदकस्थालम् ।

पूर्य इति किम ? उदकदेशः ॥ १०५ ॥

उदकस्य पूर्वपदस्य उत्तरपदस्य च संज्ञायां उदः स्यात् । उदमेघः, उदवाहः, उदपानम्, उदधिः, लवणोदः, कालोदः ॥ १०७ ॥

## ते लुग्वा । ३ । २ । १०८ ।

संज्ञाविषये पूर्वोत्तरपदे लुग् वा स्यात् देवदत्तः, देवः, दत्तः ॥१०८॥

## द्वय-न्तर नवर्णोपसर्गादप ईप् । ३ । २ । १०९ ।

द्वय-न्तभ्यां अवर्णान्तवर्जोपसर्गेभ्यश्च

खित्प्रत्ययान्ते उत्तरपदे
मोऽन्तो यथासम्भवं
ह्रस्वादेशश्च स्यात् ।
झंमन्यः, कालिंमन्या, अरुन्तुदः ।
खितीति किम् ? ज्ञ-मानी ।
अन-व्ययस्येति किम् ?
दोपामन्यमहः ॥ १११ ॥

**सत्याऽगदाऽस्तोः कारे । ३ । २ । ११२ ।**

एभ्यः
कारे उत्तरपदे
मोऽन्तः स्यात् ।
सत्यङ्कारः,
अगदङ्कारः,
अस्तुङ्कारः ॥ ११२ ॥

**लोकम्पृण---मध्यन्दिनाऽ-**
**नभ्याशमित्यम् । ३ । २ । ११३ ।**

एते
कृतपूर्वपदमोऽन्ता

खित्प्रत्ययान्ते उत्तरपदे
मोऽन्तो यथासम्भवं
ह्रस्वादेशश्च स्यात् ।
ज्ञंमन्यः, कालिमन्या, अरुन्तुदः ।
खितीति किम् ? ज्ञ-मानी ।
अन-व्ययस्येति किम् ?
दोषामन्यमहः ॥ १११ ॥

**सत्याऽगदाऽस्तोः कारे । ३ । २ । ११२**

एभ्यः
कारे उत्तरपदे
मोऽन्तः स्यात् ।
सत्यङ्कारः,
अगदङ्कारः,
अस्तुङ्कारः ॥ ११२ ॥

**लोकम्पृण---मध्यन्दिनाऽ-नभ्याशमित्यम् । ३ । २ । ११३ ।**

एते
कृतपूर्वपदमोऽन्ता

परस्याऽऽप उत्तरपदस्य
ईप् स्यात् ।
द्वीपम् , अन्तरीपम् ।
नीपम्, समीपम् ।
उपसर्गादिति किम् ? स्वापः ।
अन-वर्णेति किम् ?
प्रापम् , परापम् ॥ १०९ ॥

**अनोर्देशे उप् । ३ । २ । ११० ।**

अनोः परस्यापो
देशेऽर्थे उप् स्यात् ।
अनूपो देशः ।
देश इति किम् ?
अन्वीपं वनम् ॥ ११० ॥

**खित्यन-व्ययाऽरुषो मोऽन्तो ह्रस्वश्च । ३ । २ । १११ ।**

स्वरान्तस्याऽ
अन-व्ययस्य
अ-रुषश्च

खित्प्रत्ययान्ते उत्तरपदे
मोऽन्तो यथासम्भवं
ह्रस्वादेशश्च स्यात् ।
झंमन्या, कालिमन्या, अरुन्तुदः ।
खितीति किम् ? ज्ञ-मानी ।
अन-व्ययस्येति किम् ?
दोपामन्यमहः ॥ १११ ॥

**सत्याऽगदाऽस्तोः कारे । ३ । २ । ११२ ।**

एभ्यः
कारे उत्तरपदे
मोऽन्तः स्यात् ।
सत्यङ्कारः,
अगदङ्कारः,
अस्तुङ्कारः ॥ ११२ ॥

**लोकम्पृण---मध्यन्दिनाऽ-
नभ्याशमित्यम् । ३ । २ । ११३ ।**

एते
कृतपूर्वपदमोऽन्ता

निपात्यन्ते ।

लोकम्पृणः

मध्यन्दिनम्,

अनभ्याशमित्यः ॥ ११३ ॥

**भ्राष्ट्राग्नेरिन्धे । ३ । २ । ११४ ।**

आभ्यां

इन्धेः उत्तरपदे

मोऽन्तः स्यात् ।

भ्राष्ट्रमिन्धः अग्निमिन्धः ॥ ११४ ॥

**अ-गिलाद् गिल-गिलगिलयोः । ३ । २ । ११५ ।**

गिलान्तवर्जात् पूर्वपदात् परे

गिले गिलगिले चोत्तरपदे

मोऽन्तः स्यात् ।

तेमिङ्गिलः, तिमिङ्गिलगिलः ।

अगिलादिति किम्?

तिमिङ्गिलगिलः ॥ ११५ ॥

भद्रोष्णात् करणे । ३ । २ । ११६ ।

आभ्यां परः

करणे उत्तरपदे

मोऽन्तः स्यात् ।

भद्रंकरणम्, उष्णंकरणम् ॥ ११६ ॥

नवाऽखित्-कृदन्ते रात्रेः ।३।२।११७।

खित्वर्जे कृदन्ते उत्तरपदे परे

रात्रेः

मोऽन्तो

वा स्यात् ।

रात्रिंचरः-रात्रिचरः ।

खिद्वर्जनमिति किम् ?

रात्रिमन्यमहः ।

कृदन्त इति किम् ?

रात्रिसुखम् ।

अन्तग्रहणं किम् ? रात्रयिता ॥ ११७ ॥

धेनोर्भव्यायाम् । ३ । २ । ११८ ।

धेनोः
भव्यायामुत्तरपदे
मोऽन्तो वा स्यात् ।
धेनुम्भव्या-धेनुभव्या ॥११८॥

## अ-षष्ठीतृतीयादन्याद् दोऽर्थे । ३ । २ । ११९ ।

अ-षष्ठ्यन्ताद् अ-तृतीयान्ताच्च
अन्यात्
अर्थे उत्तरपदे
द् अन्तो वा स्यात् ।
अन्यदर्थः-अन्यार्थः ।
षष्ठ्यादिवर्जनं किम् ?
अन्यस्यान्येन वाऽर्थोऽन्यार्थः ॥ ११९ ॥

## आशी-राशा-ऽऽस्थिता-ऽऽस्थो-त्सुको-ति-रागे । ३ । २ । १२० ।

एषूत्तरपदेषु
अ-षष्ठी-तृतीयात्
अन्याद्
द् अन्तः स्यात् ।

अन्यदाशीः, अन्यदाशा,
अन्यदास्थितः, अन्यदास्था,
अन्यदुत्सुकः, अन्यदूतिः,
अन्यद्रागः ।
अ-षष्ठीतृतीयादित्येव ?
अन्यस्य अन्येन वा
आशीः अन्याशीः ॥ १२० ॥

## ईय-कारके ।३।२।१२१।

अन्याद्
ईये प्रत्यये
कारके चोत्तरपदे
दोऽन्तः स्यात् ।
अन्यदीयः, अन्यत्कारकः ॥ १२१ ॥

## सर्वादि-विश्वग्-देवाद् डद्रिः क्व्यञ्चौ ।३।२।१२२।

सर्वादेः
विष्वग्-देवाभ्यां च
परतः

क्विबन्ते अञ्चौ उत्तरपदे
डद्रिरन्तः स्यात् ।
सर्वद्रीचः,
द्व्यद्र्यङ्,
कद्र्यङ्.
विष्वद्र्यङ्,
देवद्र्यङ्,
क्वीति किम् ?
विष्वगंचनम् ॥ १२२ ॥

## सह-समः सध्रि-समि ।३।२।१२३।

अनयोः स्थाने
क्विबन्ते अञ्चौ उत्तरपदे
यथासंख्यं
सध्रि–समी स्याताम् ।
सध्र्यङ्, सम्यङ् ।
[क्वि ? सहाऽञ्चनम् ॥ १२३ ॥

## [ति]र्यति । ३ । २ । १२४ ।

नगः-अगो गोरः ।

अ-प्राणिनीति किम् ?

अगोऽयं शीतेन ॥ १२७ ॥

**नखादयः । ३ । २ । १२८ ।**

एते

अकृताऽकाराद्यादेशा

निपात्यन्ते ।

नखः, नासत्यः ॥ १२८ ॥

**अन् स्वरे । ३ । २ । १२९ ।**

स्वरादौ उत्तरपदे

नञः अन् स्यात् ।

अनन्तो जिनः ॥ १२९ ॥

**कोः कत्तत्पुरुषे । ३ । २ । १३० ।**

स्वरादौ उत्तरपदे

कोः

तत्पुरुषे

कद् स्यात् ।

कदश्वः ।

तत्पुरुष इति किम् ?

कूष्ट्रो देशः ।

स्वर इत्येव ? कुब्राह्मणः ॥ १३० ॥

## रथ-वदे । ३ । २ । १३१ ।

रथे वदे चोत्तरपदे

कोः कद् स्यात् ।

कद्रथः, कद्वदः ॥ १३१ ॥

## तृणे जातौ । ३ । २ । १३२ ।

जातौ अर्थे

तृणे उत्तरपदे

कोः कद् स्यात् ।

कत्तृणा रोहिषाख्या तृणजातिः ॥ १३२ ॥

## कत् त्रिः । ३ । २ । १३३ ।

कोः किमो वा
त्रौ उत्तरपदे
कद् स्यात् ।
कत्त्रयः ॥ १३३ ॥

काऽक्ष-पथोः । ३ । २ । १३४ ।

अनयोः
उत्तरपदयोः
कोः का स्यात् ।
काऽक्षः, कापथम् ॥ १३४ ॥

पुरुषे वा । ३ । २ । १३५ ।

पुरुषे उत्तरपदे
कोः का वा स्यात् ।
कापुरुषः—कुपुरुषः ॥ १३५ ॥

अल्पे । ३ । २ । १३६ ।

ईषदर्थस्य कोः उत्तरपदे
का स्यात् ।
कामधुरम्, काऽच्छम् ॥ १६६ ॥

का-कत्रौ वोष्णे । ३ । २ । १३७ ।

उष्णे उत्तरपदे

कोः का-कवौ वा स्याताम् ।

कोष्णम्—कवोष्णम् ।

पक्षे यथाप्राप्तमिति ।

तत्पुरुषे–

कदुष्णम् ।

बहुव्रीहौ–

कूष्णो देशः ॥ १३७ ॥

## कृत्येऽवश्यमो लुक् । ३ । २ । १३८ ।

कृत्यान्ते उत्तरपदे

अवश्यमो

लुक् स्यात् ।

अवश्यकार्यम् ।

कृत्य इति किम् ?

अवश्यं लावकः ॥ १३८ ॥

## समः तत-हिते वा । ३ । २ । १३९ ।

तते हिते चोत्तरपदे

समो लुग् वा स्यात् ।

सततम्—सन्ततम् ।
सहितम्-संहितम् ॥ १३९ ॥

## तुमश्च मनः-कामे ।३।२।१४०।

तुम्—समोः
मनसि कामे चोत्तरपदे
लुक् स्यात् ।
भोक्तुमनाः, गन्तुकामः
समनाः सकामः ॥ १४० ॥

## मांसस्यानङ्-घञि पचि नवा ।३।२।१४१।

अनङ्-घञन्ते पचौ उत्तरपदे
मांसस्य लुग् वा स्यात् ।
मांस्पचनम्, मांसपचनम् ।
मांस्पाकः, मांसपाकः ॥ १४१ ॥

## दिक्शब्दात् तीरस्य तारः ।३।२।१४२।

अस्मात् परस्य
तीरस्य उत्तरपदस्य
तारो वा स्यात् ।
दक्षिणतारम्-दक्षिणतीरम् ॥ १४२ ॥

**सहस्य सोऽन्यार्थे । ३ । २ । १४३ ।**

उत्तरपदे परे
बहुव्रीहौ
सहस्य सो वा स्यात् ।
सपुत्रः-सहपुत्रः ।
अन्यार्थे इति किम् ?
सह-जः ॥ १४३ ॥

**नाम्नि । ३ । २ । १४४ ।**

उत्तरपदे परे
बहुव्रीहौ
सहस्य सः
संज्ञायां स्यात् ।
साश्वत्थं वनम् ।

अन्यार्थ इत्येव ?

सहदेवः कुरुः ॥ १४४ ॥

**अदृश्याधिके । ३ । २ । १४५ ।**

अदृश्यं=परोक्षम्,

अधिकं=अधिरूढं

तदर्थयोः उत्तरपदयोः

बहुव्रीहौ

सहस्य सः स्यात् ।

साग्निः कपोतः,

स-द्रोणा खारी ॥ १४५ ॥

**अ-कालेऽव्ययीभावे । ३ । २ । १४६ ।**

अ-कालवाचिन्युत्तरपदे

सहस्य

अव्ययीभावे

सः स्यात् ।

सब्रह्म साधूनाम् ।

अ-काल इति किम् ?

सहपूर्वाह्णं शेते ।

अव्ययीभाव इति किम् ?

सहयुध्वा ॥ १४६ ॥

## ग्रन्थाऽन्ते । ३ । २ । १४७ ।

एतद्वाच्युत्तरपदे

सहस्य

अव्ययीभावे

सः स्यात् ।

सकलं ज्योतिषमधीते ॥ १४७ ॥

## नाऽऽशिष्य-गो-वत्स-हले

## । ३ । २ । १४८ ।

गवादिवर्जे उत्तरपदे

आशिषि गम्यायां

सहस्य सो

न स्यात् ।

स्वस्ति गुरवे सहशिष्याय ।

आशिषीति किम् ? सपुत्रः

गवादिवर्जनं किम् ?
स्वस्ति तुभ्यं
सगवे–सहगवे ।
सवत्साय–सहवत्साय,
सहलाय–सहहलाय ॥ १४८ ॥

**समानस्य धर्मा-ऽऽदिषु । ३ ।२। १४९ ।**

धर्मादौ उत्तरपदे
समानस्य
सः स्यात् ।
सधर्मा, सनामा ॥ १४९ ॥

**स-ब्रह्मचारी । ३ । २ । १५० ।**

अयं निपात्यते ॥ १५० ॥

**दृक्-दृश-दृक्षे । ३ । २ । १५१ ।**

एषु–उत्तरपदेषु
समानस्य
सः स्यात् ।
सदृक्, सदृशः, सदृक्षः ॥ १५१ ॥

## अन्य-त्यदादेरा: । ३ । २ । १५२ ।

अन्यस्य

त्यदादेश्च

दृगादौ उत्तरपदे

आः स्यात् ।

अन्यादृक्,

अन्यादृशः,

अन्यादृक्षः ।

त्यादृक्,

त्यादृशः,

त्यादृक्षः ।

अस्मादृक्,

अस्मादृशः,

अस्मादृक्षः ॥ १५२ ॥

## इदम्-किम् ईत्-की । ३ । २ । १५३ ।

दृगादौ उत्तरपदे

इदम्-किमौ

पिहितम्, अ-पिहितम् ।

पिनद्धम्, अपिनद्धम् ॥ १५६ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां
सिद्धहेमचन्द्राभिधानस्वोपज्ञ-
शब्दानुशासनलघुवृत्तौ
तृतीयस्याध्यायस्य
द्वितीयः पादः समाप्तः

॥ इति समासाश्रयकार्यप्रकरणम् ॥

सद्गुरूपास्तिबलेन
परिकर्मितविवेकमतिमन्तरा
व्याकरणादिज्ञानं न हितावहम् ।

॥ शास्त्र-मर्मज्ञतापरिकर्मणाये
ज्ञानाचार-मर्यादा-
सत्यापनपूर्वं
हि
व्याकरणाध्ययनं
मुमुक्षूणां
समुपयोगि
भवति ॥

# श्रीसिद्धहेमशब्दानुशासन-लघुवृत्ति-(प्रथमभाग) सूत्रानुक्रमणिका

## अ

# वि...शो...ध्य प...ठ...न्तु!!

| शुद्धपाठः | पत्रम् | पङ्क्तिः | शुद्धपाठ | पत्रम् | पङ्क्तिः |
|---|---|---|---|---|---|
| निष्पत्तिः | २ | ६ | बिम्बौष्ठी | ३३ | २ |
| एऐ | ४ | ११ | इ-उ ऋ० | ३४ | ९ |
| कण्ठ्यः | ५ | १४ | ऋादिः | ३४ | १५ |
| °प्लुतौ | १० | १४ | °सङ्ख्यम् | ३७ | ५ |
| परस्परं स्वाः | ११ | १७ | ऋतो | ३७ | १२ |
| भेदौ | १३ | ११ | १-२-२७ | ३८ | २ |
| जसमौ० | १३ | १३ | प्लुतो० | ४० | ८ |
| °स्यामहि० | १४ | १० | उ इति | ४२ | ११ |
| °ऽसत्त्वे | १९ | १४ | कुङ्ङ्वास्ते | ४४ | ७ |
| विभक्त्य० | २० | ११ | कुङङुआस्ते | ४४ | ७ |
| °पदः | २४ | २ | असत्त्वाण् | ४४ | ८ |
| °प्रथमस्या० | २४ | १० | °नीदादेः | ४४ | १० |
| ऋॢ | २६ | २ | खट्वा | ४५ | ३ |
| ऋकारः | २६ | ७ | नॄरूपाहि | ५२ | १३ |
| आर् | २९ | ११ | वव्वँम्यते | ५५ | ३ |
| दुःखेन० | २९ | १४ | कव्वँः | ५५ | ५ |
| आयार् | २९ | १५ | °छेते,प्राङ्क् शेते | ५६ | १२ |
| ऋता | २९ | १८ | इनः मः | ५७ | |
| °क्षरैः | ३० | १४ | भ्रत्योतति | ५७ | |

| शुद्धपाठः | पत्रम् | पङ्क्तिः |
|---|---|---|
| पदान्तस्थयोः | ६० | १३ |
| पटविंह | ६२ | ८ |
| तविंह | ६२ | १० |
| परस्य | ६२ | १३ |
| त्वक्क् | ६६ | ८ |
| १-३-३५ तमं सूत्रं दृष्टि-दोषितः पतितं, तद्धि एवम्- | ६७ | ६ |
| शिटःप्रथम द्वितीयस्य १-३-३५ | | |
| शिटः परयोः प्रथम-द्वितीययोः द्वे रूपे वा स्याताम् । | | |
| त्वंक्करोषि-त्वंकरोषि । | | |
| त्वंक्खनसि-त्वं खनसि ॥३५॥ | | |
| पुत्राऽऽदिनी | ६८ | ८ |
| पुत्राऽऽदिनी | ६८ | ९ |
| दीर्घ० | ७० | २ |
| सोढा, वोढा, उद० | ७१ | ७ |
| चक्षुश्च्यातति | ७७ | ८ |

| शुद्धपाठः | पत्रम् | पङ्क्तिः |
|---|---|---|
| तवर्गस्य | ८२ | ३ |
| ऐसु | ८४ | १ |
| १-४-३ | ८४ | ७ |
| एद् बहु० | ८४ | १५ |
| १-४-७ | ८५ | १३ |
| ङेङस्योः | ८५ | १५ |
| खट्वायाम् | ९१ | ३ |
| एकारः स्यात् | ९१ | १८ |
| इदन्त० | ९२ | ३ |
| ईदुतौ | ९२ | ६ |
| साधवे | ९३ | २ |
| ङिडौँः | ९३ | १३ |
| ङिःऔः | ९३ | १८ |
| स्त्रीदूदन्ताभ्यां | ९७ | १२ |
| स्त्रीदूदन्ताच्च | ९८ | ८ |
| तेषां | १०४ | ११ |
| °चतसृ-भ्र्यः | १०५ | ५ |
| पितॄणाम् | १०५ | २३ |
| चतसृ-भ्र्० | १०५ | १४ |
| पितॄन् | १०६ | १८ |
| °शसोः | २०८ | ३ |
| °शसोः | १०८ | ७ |

| शुद्धपाठः | पत्रम् | पङ्क्तिः |
|---|---|---|
| ऽन्तस्याऽन् | १११ | १३ |
| °नाम्यन्तानाम् | १११ | १५ |
| आप्वर्जे | ११२ | ८ |
| कर्तृणी | ११२ | १२ |
| युञ्जौ | ११५ | ११ |
| पुंसो | ११६ | २ |
| पथिन् | ११७ | ४ |
| इन् ङीस्वरे० १-४-७९ | ११८ | १४ |
| मथः अनृभुक्षी | | |
| सेना कुले वा | ११९ | ४ |
| ऋभुक्षः | | |
| वाःशेषे | १२० | ४ |
| वाः स्यात् | १२० | १० |
| १-४-८३ | १२० | १५ |
| तस्मिन् परे | १२१ | १८ |
| कर्तृणि | १२२ | ४ |
| हन्-पूषा० | १२२ | १३ |
| क्रोष्ट्रीभ्याम् | १२६ | ३ |
| परिपालन० | १२६ | १२ |
| त्रिचतुर० | १२७ | ३ |
| °चतुरोः | १२७ | ६ |
| अनि=न विषयात् | १२८ | ६ |
| २-१-७ | १३० | २ |
| २ १ ८ | १३० | १० |
| °स्मदोर्मोः | १३० | १९ |
| युवाम् °वाम् | १३१ | १६ |
| °दस्मदी च एक० | १३७ | ३ |
| घर्मोऽ० | १३७ | १० |
| घर्मो० | १३८ | ७ |
| साधो सुवि० | १४१ | १९ |
| न स्यात् | १४२ | ८ |
| दृश्यर्थे० | १४३ | ७ |
| दृश्यर्थे० | १४४ | ४ |
| °मा लोको | १४५ | ३ |
| युवां | १४५ | १८ |
| अद् व्यञ्जने | १४८ | ४ |
| २-१-३८ | १५० | २ |
| सौ परे | १५० | ४ |
| °मभिव्याप्य | १५१ | १३ |
| त्यौ द्वौ | १५१ | १६ |
| °मिच्छति | १५८ | १४ |
| धातोः | १५८ | १५ |
| असत्=असिद्धं | १६० | १९ |
| सर्पीषि | १६१ | ५ |

| शुद्धपाठः | पत्रम् | पङ्क्तिः | शुद्धपाठः | पत्रम् | पङ्क्तिः |
|---|---|---|---|---|---|
| यौ स्वौ | १६२ | ९ | एभिर्युक्ताद् | २०८ | ५ |
| यौ वौ | १६३ | ९ | उभयतः | २०८ | १७ |
| कुरू इत्युकारः | १६४ | ३ | भागिनि | २०९ | १५ |
| अहरधीते | १६७ | ९ | °कार्योऽशः | २०९ | १६ |
| निघोक्ष्यते | १६८ | ११ | °पुष्पेषु | २१६ | ५ |
| न्यघूढ्वम् | | | क्रियाऽपि | २२० | ७ |
| अलब्धाः | १६९ | १० | वर्तते | २२० | ९ |
| नाम्यन्तात् | १७० | ४ | °नाप्ते | २२३ | २ |
| २-१-८१ | १७० | ६ | °मानात् | २२३ | ४ |
| अनायिढ्वम् | १७० | १२ | °ऽऽश्रयणं | २२४ | १० |
| °न्तस्थात् | १७० | १८ | मा भूत् | २२४ | १२ |
| नासिका० | १७९ | १० | नमोऽर्हद्भ्यः | २२६ | १७ |
| °ष्ट्र-स्वर० | १८२ | १५ | आरादर्थैः | २२७ | २ |
| भाती | १८६ | ३ | अन्यस्य | २३१ | १० |
| आहारयत्यो० | १९३ | १६ | °हेतोः | २३६ | ४ |
| इयभिवदो० | १९४ | २ | ,, | २३७ | २ |
| मैत्रं | १९६ | १३ | ओदनं | २३८ | ६ |
| र २-२-१८ | १९९ | ५ | पवमानः | २३८ | ९ |
| २-२-२६ | २०३ | ५ | अधीयंस्त० | २३८ | १२ |
| अपादानम् | २०४ | १२ | कुर्वन् | २३८ | १४ |
| आमन्त्र्यार्थ० | २०६ | १२ | आगामी वा | २४० | १२ |
| [illegible] वा | २०७ | १५ | द्विःकांस्य० | २४१ | १५ |

| शुद्धपाठः | पत्रम् | पङ्क्तिः |
|---|---|---|
| कुशलो | २४२ | ३ |
| २-४-१०१ | २४३ | १६ |
| दग्धेषु | २४७ | ५ |
| द्व्यहात् | २४९ | ८ |
| घर्मात् वा | २५० | १० |
| पष्ठूया० | २५१ | ६ |
| परः | २५१ | १० |
| हेत्वर्थेस्तृतीयायाः | २५१ | १४ |
| को हेतुः | २५२ | १० |
| मे=नक्षत्रे | २५५ | ४ |
| फल्गुनीषु | २५५ | ११ |
| एसे मे | २५६ | ४ |
| सम्बन्धिनो | २५८ | १० |
| °कुम्भकुशा० | २५९ | ८ |
| आयुष्टोमः | २६६ | १२ |
| परस्य | २६७ | ३ |
| मातुःष्वसा | २६७ | ८ |
| पितुः स्वसा | | |
| श्रोषेणः | २७० | ६ |
| शङ्कुष्ठः | २७२ | ७ |
| परस्य | २७६ | ३ |
| प्रत्यष्टम्नात् | २७८ | १३ |
| °मवष्टभ्नाति | २७९ | ७ |
| अवाष्ट्रणत् | २८० | ११ |
| असौ ह० | २८३ | १२ |
| पर्यष्वजत | २८३ | १९ |
| पर्यस्वजत | | |
| न्यष्वजत | | |
| न्यस्वजत | | |
| निरभ्यनोश्च | २८४ | १३ |
| परिस्कन्ता | २८६ | १२ |
| २-३.५४ | २८६ | १२ |
| अस्तेः सो | २८८ | ५ |
| गतौ | २८९ | २ |
| नृणाम् | २९० | ५ |
| आम्रवणम् | २९२ | २ |
| स्यात् | २९२ | १२ |
| स्यात् | २९३ | ५ |
| स्यात् | २९३ | १२ |
| स्यात् | २९३ | १७ |
| स्यात् | २९५ | ८ |
| युवन् | २९६ | २ |
| स्यात् | २९६ | १६ |
| °पसर्गस्थात् | २९७ | ४ |

| शुद्धपाठः | पत्रम् | पङ्क्तिः |
|---|---|---|
| स्यात् | २९७ | ७ |
| °द्राति० | २९८ | १० |
| °बान्ते पाठेवा | २९९ | १० |
| स्यात् कृत्प्रत्यये | ३०१ | १७ |
| °स्याद् रादेः | ३०२ | ११ |
| व्यञ्जना० | ३०३ | २ |
| –प्रभावनम् | ३०५ | ११ |
| २-३.९२ | ३०६ | ८ |
| २-३-९५ | ३०७ | ९१ |
| २-३-९६ | ३०७ | १८ |
| स्त्रीवृत्तेः | ३१३ | ६ |
| ाघातूद्दितः | ३१४ | २ |
| ्तदन्तात् | ३१४ | १६ |
| कुण्डोघ्नी | ३१६ | १४ |
| ..माहारात् | ३२१ | १६ |
| रेवती० | ३२४ | ६ |
| रेरंसु० | ३२६ | ५ |
| स्वरादुतो० | ३२९ | १५ |
| ्नःपलिता० | ३३१ | २ |
| बह्वादि० | ३३२ | २ |
| दीर्घ० | ३३२ | ५ |

| शुद्धपाठः | पत्रम् | पङ्क्तिः |
|---|---|---|
| बिम्बोष्ठा | ३३२ | १५ |
| सुकण्ठी | ३३३ | ५ |
| स्वाङ्गाभ्याम् | | |
| आभ्याम् | ३३२ | ११ |
| असंज्ञायाम् एव | ३३३ | १२ |
| करणादेः | ३३५ | ९ |
| दन्तमिता० | ३३६ | ६ |
| गर्भिण्योः | ३३९ | ३ |
| गर्भिण्यां च | ३३९ | ६ |
| नित्यस्त्री० | ३३९ | १० |
| किम् ? खट्वा | ३३९ | १९ |
| मुद्गपर्णी | ३४० | ८ |
| २-४-५६ | ३४० | १२ |
| सदादि० | ३४० | १३ |
| शङ्खपुष्पी | ३४० | १८ |
| २-४-६० | ३४३ | ३ |
| °ऽऽचार्यो० | ३४४ | ८ |
| तित्तिरिः | ३४८ | ८ |
| °कद्रु० | ३४९ | ९ |
| वाहवन्तात् | ३४९ | ११ |
| कमण्डलुः | ३४९ | १५ |
| ऊङ्, स्यात् | ३५० | ४ |

| शुद्धपाठः | पत्रम् | पङ्क्तिः | शुद्धपाठः | पत्रम् | पङ्क्तिः |
|---|---|---|---|---|---|
| अशिनेति | ४०३ | १७ | स्थेणो० | ४११ | |
| सायाह्नादयः | ४०४ | २ | कौथुमम् | ४५२ | |
| तत्पुरुषाः | ४०४ | ३ | ०वाच्चिनां | ४५२ | |
| समेंऽशे० | ४०४ | ११ | प्राग्निपातं | ४५६ | १ |
| पूरण० | ४०५ | २ | बहुव्रीहौ | ४५६ | ११ |
| एकशब्दः | | | एतद्वाचि | ४६१ | ११ |
| तृतीयान्तो | ४११ | ४ | ३।२।११ | ४६३ | ६ |
| आतुरार्था यवागूः | ४१२ | १४ | ऋद्ध० | ४६६ | ६ |
| इति | ४१४ | १४ | नाम्ने | ४६७ | १२ |
| "चाचारे" | ४१९ | ५ | लुब् | ४७८ | ३ |
| पूर्वकालैक० | ४२४ | १७ | ०कन्या० | ४८० | ५ |
| कृतार्थे० | ४३० | ४ | ०ष्वति | ४८१ | १० |
| ०वचनैः | ४३२ | ७ | विद्या० | ४८२ | २ |
| प्लक्षश्च | ४३९ | ९ | परतः स्त्री | ४९३ | ११ |
| ०श्चैकश्च | ४४१ | ३ | प्रत्यययोः | ४९४ | ११ |
| भेदो वा | ४४२ | १८ | पुंवच्च | ४९६ | ११ |
| ०नैकं च वा | ४४५ | १२ | दस्ति | ५११ | ११ |
| मघाः | ४४७ | २ | ३।२।९७। | ५१६ | २ |
| बदरा० | ४५० | २ | ञमन्यः, | ५२३ | ५ |